दित्वात् साधुः। "तन्द्रिः सादनमोहनयोः" सौत्रः। तन्द्रयते वा तन्द्रिः। पदि-पठिपच्चि०" [उ. ६०७] इति आदिशब्दाद् इः। [[1]तन्द्रा आलस्ये आदन्तः। तन्द्राति अनया अस्यां वा। "नाम्युपान्त्य०" [उ. ६०९] इति बहुवचनात् कित् इः][1] "तृस्तृ-तन्द्रितन्त्र्यविभ्य ईः "[उ. ७११] इति 'ई' प्रत्यये तन्द्रीः ईकारान्तोऽयम्। तन्द्रीत्यपि। नियतम् द्रान्ति इन्द्रियाणि अस्यां निद्रा तस्याम्।

**अहम्प्रथमिकाऽपि च ॥१९॥**

**अहम्पूर्विकायाम्** ।

अहम् प्रथमम् अहंप्रथम इति। अहं प्रथमम् इत्यस्यां अहंप्रथमिका। अहम् पूर्वम् अहंपूर्व इति। अहम् पूर्वं इति यस्यां सा अहंपूर्विका। मयूरव्यंसकादित्वात् तत्पुरुषसमासे निपात्यते। निपातनाद् अकन्यपि वृद्ध्यभावः। अहमिति शब्दो विभक्त्यन्तप्रतिरूपको निपातः। एवं अहमग्रिका अपि। यदाह **गौडः**—

अहं पूर्वः अहंपूर्व इत्यहंपूर्विका स्त्रियाम्।
आहोपुरुषिका दर्पाद्या स्यात् सम्भावनात्मनि॥
अहमहमिका तु स्यात् परस्परमहंकृतिः।

इति।

**केलिकिलोऽपि स्याद् विदूषके।**

केल्या—क्रीडया किलति केलीकिलः। "किलत् श्वैत्यक्रीडनयोः" सन्धि विग्रहेण विग्रहम् च सन्धिना दूषयति विदूषकः—भाण्डः,[2] तत्र।

**मार्षवन्मारिषोऽपि।**

मर्षणात्—सहनात् मार्षः। मृणाति मारिषः। "अमिमॄभ्यां णित्" [उ.-५४९] इति इषः। पर्षत्, परिषत् इत्यादिवद् वा। आर्यनाम्नी।

**इति शिलोञ्छो देवकाण्डगः ॥ २० ॥**

इति अमुना प्रकारेण, यद् वा इतिशब्दः समाप्त्यर्थस्तेन देवकाण्डम् गच्छति देवकाण्डगः— देवकाण्डानुगतः शिलोञ्छः समाप्तः ॥ २० ॥

इति श्रीमद्बृहत्खरतरगच्छीय[3]श्रीजयसागरमहोपाध्यायसन्तानीय—
वाचनाचार्यश्रीभानुमेरुगणिशिष्यमुख्यश्रीज्ञानविमलो—
पाध्यायविनेयवाचनाचार्यश्रीवल्लभगणि—
विरचितायां श्रीहैमनाममालाशिलोञ्छ—
टीकायां द्वितीयदेवकाण्डस्य
शिलोञ्छः समाप्तः।

---

१—१ प्रा० प्रतौ 'तन्द्रा आलस्ये' इत्यतः आरभ्य 'बहुवचनात् कित् इः' इतिपर्यन्तः पाठो नोपलभ्यते। २. जे. ज. भण्डः। ३. जे. श्रीजयसागरोपाध्याय°।

# तृतीयो मर्त्यकाण्डः

अथ तृतीयमर्त्यकाण्डस्य शिलोञ्छो वित्रियते—

**स्तनन्धये स्तनपश्च क्षीरपश्चाऽभिधीयते ।**

"ट्धें पाने" स्तनौ धयति स्तनन्धयो बालस्तत्र ।

"शुनीस्तनमुञ्जकूलाऽऽस्यपुष्पात् ट्धेः" [५ ।१ ।११९] इति खश् । स्तनौ पिबति स्तनपः । " स्थापास्नात्रः कः" [५ । १ । १४२] इति कः । क्षीरम्—दुग्धम् पिबति क्षीरपः । "स्थापा०" [ ५ । १ । १४२ ] इति कः । अभिधीयते—कथ्यते पण्डितैरिति गम्यम् ।

**तारुण्यं स्याद् यौवनिका ।**

तरुणस्य भावः कर्म वा तारुण्यम् । यूनो भावो यौवनिका । स्त्रीपुंसलिङ्गः । "चौरादेः" [ ७ । १ । ७३ ] इति अकञ् । "यूनोऽके" [ ७ । ४ । ५०] इत्यनेन अके प्रत्यये परे सति युवन्शब्दस्य अन्त्यस्वरादेर्लुगभावः । युवत्वम् युवता च ।

**दशमीस्थो जरत्तरः ॥२१॥**

दशम्याम् अवस्थायां तिष्ठतीति दशमीस्थः । "स्थापास्नात्रः कः" [५ । १ । १४२ ] इति कः । यदाह **भागुरिः** ।

इष्टो वयोदशोपेतः पञ्चमी सप्तमीति च ।
प्रवया दशमीस्थः स्यात् । इति ।

जरन्नेव जरत्तरः । "क्वचित् स्वार्थे" [७ । ३ । ७] इति तरप् ॥२१॥

**कविताऽपि कविः स्यात् ।**

"कवृङ् वरणे" कवते कौति वा इत्येवंशीलः कविता । "तृन् शीलधर्मसाधुषु" [५ । २ । २७] इति तृन् । कवते कौति वा कविः । " कुङ् शब्दे" "स्वरेभ्य: इः" [उ. ६०६] इति इः । शुचिः, कृष्टिः, किकिः, पठिः, हुण्डिः, रपठो, मन्ता धीवा, बुधानः च ।

**कृतकर्मणि कृतकृत्यकृतिकृतार्थाश्च ।**

कृतं कर्माऽनेन कृतकर्मा—प्रवीणस्तत्र । कृतम् कृत्यम्—कार्यम्—अनेन कृतकृत्यः । प्रशस्तं कृतम्—कर्म—अस्य कृती । कृतोऽर्थोऽनेन कृतार्थः । सूक्ष्मः, दभ्रः दक्षार्यः निचाकुः च ।

**कुटिलाशयोऽपि कुचरः ।**

कुटिल आशयोऽभिप्रायोऽस्य कुटिलाशयः । कुत्सितम् चरति कुचरः । कद्वदनाम्नी ।

**अन्धजडशठेऽनेडमूकः स्यात् ॥२२॥**

अमति-गच्छति अनेनेति अन्धः। "स्कन्द्यमिभ्यां धः" [उ. २५१] इति धः। जलति न तीक्ष्णो भवति, डलयोरैक्ये जडः। "शमूच् उपशमे" शाम्यति शठः। "शमेर्लुक् च वा" [उ.१६५] इति ठः, लुक् चान्तस्य। शठ कैतवे च शठति वा शठो धूर्तः। अन्धश्च जडश्च शठश्च अन्धजडशठं तस्मिन् अन्धजडशठे। समाहारद्वन्द्वत्वाद् एकवद्भावः। अनेडोऽपि अवर्करोऽपि मूकोऽनेडमूकः। "अन्धो ह्यनेडमूकः स्यात्" [का. २। प. ४५३. ६०९] इति **हलायुधः**। "अनेडमूकस्तु जडः" [ ]इति **वैजयन्ती**। "शठो ह्यनेडमूकः स्यात्" [ ]इति **भागुरिः**। जडे मुदेर-बठर-गृहोल-हुड-होडा अपि। शठे कुटेरः[1], जहकः, मङ्क्रिश्च ॥२२॥

**वदान्यौ पृथगित्यन्ये दानशीलप्रियंवदौ।**

वदतः प्रियं ददानौ वदान्यौ "वदिसहिभ्यामान्यः" [उ.३८१] इति आन्यः। पृथग् इति भिन्नार्थौ। दाने शीलम्—स्वभावोऽस्य दानशीलः। प्रियं वदति प्रियंवदः। द्वन्द्वसमासे दानशीलप्रियम्वदौ। यदाह **भागुरिः**—

"शक्लो वदान्यः प्रियवाक् वदान्यो दानशीलकः"। [ ]इति।

प्रियंवदे लोकयुः, हर्षयित्नुः, शफः मन्द्रः, मन्तुः च।

**मूर्खौ यथोद्गतोऽपि**

मुह्यति कार्ये मूर्खः, "पूमुहोः पुन्मूरौ च" [उ.८६] इति खः। मुहो 'मूः' इत्यादेशश्च। यथैव उद्गतो जातस्तथैव स्थितः असंस्कृतत्वादिति यथोद्गतः।

**इभ्यः श्रीमानपि बुधैः स्मृतः ॥२३॥**

इभम् हस्तिनम् अर्हति इभ्यः। "दण्डादेर्यः" [६।४।१७८] इति यः। श्रीः—लक्ष्मीर्विद्यतेऽस्य श्रीमान्। "तदस्यास्त्यस्मिन्निति मतुः।" [७।२।१] इति मतुः। बुधैः— पण्डितैः स्मृतः — कथितः। दधाति श्रियम् इति "स्फुलिकलिपल्यादभ्य इङ्गक्" [उ. १०२] इति इङ्गकि प्रत्यये धिङ्गोऽपि ॥२३॥

**विवधिक-वीवधिकावपि वैवधिके**

विवधेन वीवधेन च भारेण पर्याहारेण वा हरति विवधिकः, वीवधिकः। पक्षे वैवधिकः। "विवधवीवधाद्वा" [६।४।२५] इति इकट्-इकणौ प्रत्ययौ। अन्नाद्यर्थं यो भारं वहति तन्नामानि। लोके यस्य "अधोवाहिक" इति प्रसिद्धिः। स्त्रियाम् तु विवधिकी, वीवधिकी, वैवधिकी इति।

---

१. जे. कुठेरः।

**प्रतिचरोऽपि भृत्ये स्यात्**

प्रतिचरति प्रतिचरः । 'प्रति' इति आभिमुख्ये । भरणीयो भृत्यः । "भृगोऽसंज्ञायाम्" [५।१।४५] इति क्यप् । तत्र भृत्ये—किङ्करे ।

**सम्मार्जको बहुकरे बहुधान्यार्जक इति प्राहुः ॥२४॥**

"मृजौक् शुद्धौ" समन्तात् सम्यक्प्रकारेण वा मार्ष्टि सम्मार्जकः । "नाम्नि पुंसि च" [५।३।१२१] इति णकः । बहुधान्यम् अर्जयति-संस्करोति बहुधान्यार्जकः। "नाम्नि पुंसि च" [५।३।१२१] इति णकः । बहु करोति बहुकरस्तत्र । इति प्राहुः—कथयन्ति पण्डिता इति गम्यम् ॥२४॥

**विहङ्गिकायां च विहङ्गमाऽपि,**

विहङ्गप्रतिकृतिश्चर्मादिमयी विहङ्गिका । "तस्य तुल्ये कः०" [७।१।१०८] इति कः । या भित्त्यादौ लम्बमाना स्थाप्यते, प्रयाणके च संधार्यते भारोद्वहनाय यष्टिः, चतुर्दण्डिका इति सभ्याः ।

"शिक्याधारः स्कन्धग्राह्यो लगुडः" [ ] इति **द्रमिलाः** ।

विहायसा गच्छति विहङ्गमा । "नाम्नो गमः खड्डौ च विहायसस्तु विहः" [५।१।१३१] इति खः । विहङ्गमप्रतिकृतित्वाद् वा विहङ्गमा ।

**अथौर्ध्वदेहिके ।**

**और्ध्वदैहिकमप्याहुः**

ऊर्ध्वं देहाद् भवं और्ध्वदेहिकं । मृतस्य दिवसे तमुद्दिश्य दानम्-पिण्डोदकादि । अध्यात्मादित्वाद् इकण् । तस्मिन् और्ध्वदेहिके अनुशतिकादिपाठमताश्रयणाद् उभयपदवृद्धौ और्ध्वदैहिकम् ।

**अनृजुः शण्ठ इत्यपि ॥२५॥**

न ऋजुः अनृजुः । "शमूच् उपशमे" शाम्यति शण्ठः । "शमेर्ढक् च वा" [उ. १६५] इति ठः । विकल्पेन मकारलोपपक्षे शठोऽपि ॥२५॥

**मायावि—मायिकौ धूर्ते**

माया विद्यतेऽस्य मायावी। "अस्तपोमायामेधास्रजो विन्" [७।२।४७] इति विन् । मायाऽस्यास्तीति मायिकः । "व्रीह्यादिभ्यस्तौ" [७।२।५] इति 'इक' प्रत्ययः । मायावान् अपि । धूर्वति—हिनस्ति धूर्तः वञ्चकस्तत्र । "शीरी०" [उ. २०१] इति कित् तः ।

**कपटे तूपधा मता ।**

कम्पयति अनेन कपटम्, पुंक्लीबलिङ्गस्तत्र । "कपटकीकटादयः" [उ. १४४] इति अटे निपात्यते । उपधीयते स्फटिकस्य इव सिन्दूरम् इति उपधा । "उपसर्गादातः" [५।३।११०] इति अङ् ।

**चोरश्चौरोऽपि विज्ञेयः**

"चुरण् स्तेये" चोरयति चोरः । अच् । चुराशीलो वा । छत्रादित्वाद् अङ् । "चर भक्षणे च, चकाराद् गतौ" चरति वा चोरः । "कोरचोरमोर०" [उ.४३४] इति ओरे निपात्यते । प्रज्ञाद्यणि, चौरः । विज्ञेयः—ज्ञातव्यः ।

**स्तेयं स्तैन्यमपीष्यते ॥२६॥**

स्तेनस्य—चोरस्य भावः स्तेयम् । "स्तेनान्नलुक् च" [७।१।६४] इति यः । राजादित्वाद् व्यणि स्तैन्यम् । स्तेनत्वम् स्तेनता च इष्यते—वाञ्छ्यते ॥२६॥

**दाने प्रादेशनमपि**

"दिशींत् अतिसर्जने" प्रादिश्यते प्रादेशनम् । "अनट्" [५।३।१२४] इत्यनट् । दीयते दानं त्यागस्तत्र । "अनट्" [५।३।१२४] इति अनट् ।

**क्षमा स्यात् क्षान्तिरित्यपि ।**

"क्षमौषि सहने" क्षमणम् क्षमा, क्षम्यते वा । "षितोऽङ्" [५।३।१०७] इति अङ् । "क्षमौच् सहने" इत्यस्य "स्त्रियां क्तिः" [५।३।९१] इति क्तौ क्षान्तिः ।

**क्रोधनः कोपनः**

"क्रुधंच् कोपे" क्रुध्यति क्रोधनः । "भूषाक्रोधार्थ०" [५।२।४२] इति अनः । "कुपच् क्रोधे" कोपशीलः कोपनः, कुप्यति वा । "भूषाक्रोधार्थ०" [५।२।४२] इति अनः ।

**तृष्णक् पिपासितोऽपि कथ्यते ॥२७॥**

'तृषंच् पिपासायाम्" तृष्यति इत्येवंशीलः तृष्णक् । "तृषिधृषिस्वपो नजिङ्" [५।२।८०] इति नजिङ् । पिपासा जाता अस्य पिपासितः । तर्षः सञ्जातोऽस्येति तर्षितोऽपि । तारकादित्वाद् इतः । कथ्यते उच्यते ॥२७॥

**भक्षकः स्यादाशिरोऽपि**

"भक्षण् अदने" भक्षयति भक्षकः । अश्नाति अत्ति आशिरः । "अशेर्णित्" [उ. ४१५] इति इरः ।

**मार्जिता चापि मर्जिता ।**

"मृजौण्. शौचालङ्कारयोः" मार्ज्यते मार्जिता । दधिसितामरिचादिकृतं रसालाख्यम् लेह्यम् । यत् सूदशास्त्रम्—

"अर्द्धाढकं सुचिरपर्युषितस्य दध्नः खण्डस्य षोडशपलानि शशिप्रभस्य ।
सर्पिःपलं मधुपलं मरिचार्द्धकर्षं, शुण्ठ्याः पलार्द्धमथवार्द्धपलं चतुर्णाम् ॥१॥
श्लक्ष्णे पटे ललनया मृदुपाणि घृष्टा, कर्पूरधूलिसुरभीकृतभाण्डसंस्था ।
एषा वृकोदरकृता सरसा रसाला, या स्वादिता भगवता मधुसूदनेन" ॥२॥

"सेट्क्तयोः" [४।३।८४] इति णेर्लुक् । "मृजौक् शुद्धौ" इत्यस्य तु औदित्वाद् वेट् । मार्जिता । "मर्च मर्जण् शब्दे" मर्ज्यते मर्जिता । "मृजौण् शौचालङ्कारयोः" इत्यस्य तु रूढेः । शिखरिणीनाम्नी ।

**पेयूषमपि पीयूषम्**

"पां पाने" पीयते पेयूषम् । "कोरदूषाटरूष०" [उ. ५६१] इति ऊषे निपात्यते । "पीयि प्रीणने" सौत्रः । पीयते पीयूषम् । खलिफलिवृपृकृजूलम्बिमञ्जिपीयि०" [उ. ५६०] इति ऊषः । नवीनदुग्धनाम्नी ।

**कूचिकाऽपि च कूर्चिका ॥२८॥**

"कुङ् शब्दे" कूयते कूची । "कुपूसमिण्भ्यश्चट् दीर्घश्च" [उ.११२] इति 'चट्' प्रत्ययो दीर्घश्च । स्वार्थिके के कूचिका । यद् वा "कूच् उद्भेदने" कूचति कूचिका । "नाम्नि पुंसि च" [५ । ३ । १२१] इति णकः । कुञ्चिका इत्यपि । "कूची" इति एके पेठुः । कूर्च[1]: क्षीरमस्तु स विद्यते अस्याः कूर्चिका—विनष्टदुग्धं "फेंदरी" इति हि प्रसिद्धिः—"अतोऽनेकस्वरात्" [७ । २ । ६] इति इकः ॥२८॥

**द्रप्से द्रप्स्यमपि प्रोक्तम्**

"दृपौच् हर्षमोहनयोः" दृप्यतेऽनेन द्रप्सम्, दध्यग्रम् ।

**यन्माला—**

"द्रप्सं दध्यघनं तथा" । [ ]

"मावावद्यमिकमि०" [उ. ५६४] इति बहुवचनात् सः । तत्र दृप्यते द्रप्स्यम् । "शिक्यास्याढ्यमध्यविन्ध्यधिष्ण्य०" [उ. ३६४] इति ये प्रत्यये निपात्यते । तत उभयत्र "स्पृशादिसृपो वा" [४ । ४ । ११२] इत्यनेनाऽकारागमः । द्रप्समेव वा द्रप्स्यम् । भेषजादित्वात् ट्यण् । प्रोक्तम्—कथितम् विद्वद्भिरिति गम्यम् । एतच्च—

---

१ प्रा. °र्चः किलाटीमस्तु ।

"द्रप्सं सरम्" इति आदिदन्त्यं मालाकारः प्राह ।
"सरो दध्यग्रबाणयोः" [ ] इति च विश्वः ।
भागुरिस्तु–तालव्यादिं शरं प्राह ।
यदाह दुर्गः–"बाणद्रप्सौ शरौ" इति ।

**विजिपिलं च पिच्छिले ।**

विजति चलति विजिपिलम् । "स्थण्डिलकपिल०" [उ.४८४] इति इलान्तो निपात्यते । पिच्छा आचामोऽस्याऽस्ति पिच्छिलम् । "लोमपिच्छादेः शेलम्" [७ । २ ।२८] इति इलः । तत्र ।

**व्योषे त्रिकटुकम्**

विशेषेण ओषति दहति व्योषम् , तत्र । त्रीणि कटूनि शुण्ठीमरिचपिप्पल्याख्यानि समाहृतानि त्रिकटु । स्वार्थिके के प्रत्यये त्रिकटुकम् । यदाह—

"महौषधं च मरिचं कणावैकीकृतं किल ।
व्यूषणं कथ्यते तज्ज्ञैस्त्रिकटु व्योषकं तथा" ॥ [ ]

**जग्धौ जमनं जवनं तथा ॥२९॥**

अदनम् जग्धिः । "स्त्रियां क्तिः" [५ । ३ । ९१] इति क्तिः "यपि चाऽदो जग्ध्" [४।४।१६] इति 'जग्ध्' आदेशः । तत्र । "चमू छमू जमू झमू जिमू अदने" "जम्यते जमनम् । "अनट्" [५।३।१२४] इति अनट् । "जु गतौ" सौत्रो धातुः । जूयते क्षुधया जवनम् । यद् दुर्गः—

"जवनं भोजनं क्वचित्" । [ ]

चमनम् अपि ॥२९॥

**आघ्राणोऽपि भवेत् तृप्तः,**

"घ्रैं तृप्तौ" आघ्रायति स्म आघ्राणः । "ऋह्रीघ्राघ्रा०" [४।२।७६] इति क्तयोः तस्य वा नत्वम् । तृप्यति तृप्तः । "तृपौच् प्रीतौ" वेट्त्वात् क्तयोर्नेट् ।

**शौष्कलः पिशिताशिनि ।**

शुष्कम् मांसम् लाति शुष्कलः, स एव शौष्कलः । प्रज्ञादित्वाद् अण् । पिशितम् मांसम् अश्नातीत्येवंशीलः पिशिताशी तस्मिन् पिशिताशिनि मांसभक्षके ।

**मनोराज्यमनोगव्यावपि स्यातां मनोरथे ॥३०॥**

मनसो राज्यं यत्र मनोराज्यम् । मनश्च तद् गौश्च मनोगवी । "विशेषणं विशेष्येणैकार्थं कर्मधारयश्च" [३।१।९६] इति कर्मधारयः, ततो 'गोस्तत्पुरुषात्'

[७।३।१०५] इति 'अट्'समासान्तः। मनसो गौरिति वा, दूरगामित्वात्। उभावपि स्यातामू-भवेताम्। मन एव रथो दूरगामित्वात् यत्र स मनोरथः, तत्र ॥३०॥

**कामुके कमनोऽपि स्यात्**

कमनशीलः कामुकः। "शृकमगमहनवृषभूस्थ उकण्" [५।२।४०] इति उकण्। तत्र। कामयते कमनः। "कमूङ् कान्तौ" "रम्यादिभ्यः कर्तरि" [५।३।१२६] इति अनट्। स्यात्-भवेत्।

**आक्षारितोऽपि दूषिते।**

आ-समन्तात् क्षार्यते स्वरूपात् चाल्यते स्म इति आक्षारितः। अलीकोत्पन्न-पातकस्य व्यपदेशः। दूष्यते स्म दूषितः। "मैथुनम् प्रति" इति एके। तत्र।

**संशयालुः सांशयिके**

संशयनशीलः संशयालुः। "शीङ्श्रद्धानिद्रातन्द्रादयि०" [५।२।३७] इति आलुः। संशयं प्राप्तः सांशयिकः। "संशयं प्राप्ते ज्ञेये" [६।४।९३] इति इकण्। तत्र।

**जागरिताऽपि जागरी ॥३१॥**

जागर्तीत्येवंशीलो जागरिता। "तृन् शीलधर्मसाधुषु" [५।२।२७] इति तृन्। जागरो जागरणम् अस्त्यस्य जागरी-जागरूकः ॥३१॥

**पूजितोऽपचायितोऽपि**

पूज्यते पूजितः। अपचाय्यते अपचायितः। "अपचितः" [४।४।७७] इति क्ते निपात्यते। चिनोतेर्हि पूजार्थो नास्तीतीदं निपातनात्। अर्चितोऽपि।

**तुन्दिभोदरिकावपि।**

**तुन्दिलः**

तुन्दिः उदरम् अस्यास्ति तुन्दिभः। इति **अमरः**। "तुन्दिवलिवटेर्भः" [ पा. ४।२।१३९] इति **पाणिनीयसूत्रेण** भः प्रत्ययः। तुन्दवान् अपि। उदरम् अस्यास्ति उदरिकः। "व्रीह्यर्थतुन्दादेरिलश्च" [ ७।२।९ ] इति इकः। उदरवान् अपि। तुन्दम् अस्यास्ति तुन्दिलः। "व्रीह्यर्थतुन्दादेरिलश्च" [७।२।९] इति इलः। बृहत्कुक्षि-नामानि।

**न्युब्जोऽपि कुब्जे**

"उब्जत् आर्जवे नीतिक्षेपार्थे" न्युब्जति न्युब्जः। "अच्" [ ५।१।४९ ] इति अच्। न्युब्जनम् न्युब्जः। घञ्। न्युब्जेन पाणिगतेन भुग्नत्वेन योगाद् वा न्युब्जः पुमान्। **यत् शाश्वतः—**

"विद्यादधोगतं न्युब्जं न्युब्जकुब्ज उदाहृतः" । [ ]

कूयते कुब्जः वक्रानताङ्गः । "कुवः कुब्कुनौ च" ( उ. १२९ ) इति 'जक्' प्रत्ययः । कुत्सित उब्ज इति वा । पृषोदरादित्वात् साधुः । तत्र ।

**खलतोऽप्यैन्द्रलुप्तिके ॥३२॥**

"खल सञ्चये च, चकाराच्चलने" खलन्ति केशाः अस्मादिति खलतः । भीमादित्वाद् अपादाने "दृपृभृमृशीयजिखलिवलि०" [उ.२०७] इति 'अतः' प्रत्ययः । इन्द्रलुप्तम् केशघ्नम् तेन चरति ऐन्द्रलुप्तिकः । "चरति" [ ६।४।११ ] इति इकण् । । तत्र । खल्वाटनाम्नी ॥३२॥

**पामरोऽपि कच्छुरः**

पामा अस्त्यस्य पामरः । "मध्वादिभ्यो रः" [७।२।२६] इति मत्वर्थे रः । पाति कण्डूम् इति वा । "जठरक्रकर०" [उ. ४०३] इति अरे निपात्यते । कच्छूः अस्त्यस्य कच्छुरः । "कच्छ्वा डुरः" [७।२।३९।] ति डुरः । पामवान् कच्छूमान् च ।

**अतीसारक्यप्यतिसारकी ।**

अतीसारो विद्यतेऽस्य अतीसारकी । एकदेशविकृतस्याऽनन्यत्वाद् इति अतिसारकी । "घञ्युपसर्गस्य बहुलम्" [३।२।८६] इति वा दीर्घः । उभयत्र "वाताऽतीसारपिशाचात् कश्चान्तः" [७।२।६१] इति 'इन्' कश्चान्तो भवति ।

**कण्डूतिरपि खर्जूः स्यात्**

"कण्डूञ् गात्रकर्षणे" कण्डूय्यते गात्रम् अनयेति कण्डूतिः । "स्त्रियां क्तिः" [५।३।९१] इति क्तिः । खर्जति व्यथते खर्जूः । स्त्रीलिङ्गः । "कृषिचमि०" [उ.८२९] इति ऊः ।

**विस्फोटः पिटके स्मृतः ॥३३॥**

"स्फट स्फुट्ट विशरणे" विस्फोटनम् विस्फोटति पादोऽनेन वा विस्फोटः । "व्यञ्जनाद् घञ् [५।३।१३२] इति घञ् । पेटति संश्लिष्यति पिटकः । त्रिलिङ्गः । "छिदिभिदिपिटेर्वा" [उ. ३०] इति किद् 'अकः' । क्षुद्रस्फोटकनाम्नी ॥३३॥

**कोठो मण्डलकमपि**

"कुठिः सौत्रः" कोठयति अङ्गं कोठः, कुण्ठयति अङ्गम् इति वा । "पण्ठैधिंठादयः"[उ.१६६] इति निपात्यते । मण्डलाकृतित्वाद मण्डलम् । स्वार्थिके के, मण्डलकम् । मण्डलप्रतिकृतिः इति वा मण्डलकम्, तदाकारसदृशत्वात् । "तस्य तुल्ये कः संज्ञाप्रतिकृत्योः" [७।१।१०८] इति कः ।

गुदकीलोऽपि चार्शसि ।

गुदस्य कीलः गुदकील इव गुदकीलः, गुदम् कीलति वा । इयर्त्ति पीडाम् अनेन अर्शः । क्लीबलिङ्गः । "अर्तेरुराशौ च" [उ.९६७] इति 'अस्' प्रत्ययः अर्श इति तालव्यशकारान्तादेशः । गुदतुद् अपि ।

मेहः प्रमेहवत्

मेहयति मूत्रयति अनेन मेहः । प्रमेहयति प्रमेहः बहुमूत्रता ।

आयुर्वेदिकोऽपि चिकित्सके ॥३४॥

"विदक् ज्ञाने" आयुर्विद्यते अनेन आयुर्वेदः—शास्त्रम् । "व्यञ्जनाद् घञ्" [५।३।१३२] इति घञ् । आयुर्वेदं वेत्ति अधीते वा आयुर्वेदिकः । "न्यायादेः" [६।२।११८] इति इकण् । यद् वा, आयुर्वेदः अस्याऽस्तीति आयुर्वेदी । [1]आयुर्वेत्ति इत्येवंशीलो वा आयुर्वेदी[1] । स्वार्थिके के, आयुर्वेदिकः । चिकित्सति चिकित्सको वैद्यस्तत्र । जैवातृक-भिषज-भिषणजा अपि ॥३४॥

आयुष्मानपि दीर्घायुः कथ्यते

आयुर्विद्यते अस्य आयुष्मान् । दीर्घम् आयुः अस्य दीर्घायुः । कथ्यते—उच्यते । जीवन्त-जीवरौ अपि ।

ऽथ परीक्षकः ।

स्यादाक्षपाटलिकोऽपि

परीक्षते परीक्षकः । मठादौ दानार्थं ब्राह्मणपरीक्षिता । अक्षपटलैः व्यवहारसमूहैश्चरतीति आक्षपाटलिकः । "चरति" [६।४।११] इति इकण् । अक्षपटलैः दीव्यतीति वा । "तेन जितजयद्दीव्यत्खनत्सु" [६।४।२] इति दीव्यति अर्थे इकण् प्रत्ययः । अनुशतिकादित्वात् उभयपदवृद्धिः ।

पारिषद्योऽपि सभ्यवत् ॥३५॥

परिषदि साधुः पारिषद्यः । "पर्षदो[2] ण्यणौ" [७।१।१८] इति ण्यः । पारिषदपार्षदौ अपि । परिषदम् समवैति पारिषद्यः । "पर्षदो ण्यः" [६।४।४७] इति परिषद्—शब्दाद् द्वितीयान्तात् समवैति समवेतेऽर्थे ण्यः प्रत्ययः इति वा । सभायां साधुः सभ्यः । "तत्र साधौ" [७।१।१५] इति यः । यथा सभ्यशब्दः सदस्ये वर्तते तथा पारिषद्योऽपीति ॥३५॥

---

१-१ जे. प्रतौ पाठो नास्ति । २ एतत् सूत्रम् 'परिषत्' शब्दे कथं प्रवर्तते ? इति विचारणीयम् ।

स्युर्नैमित्तिकनैमित्तमौहूर्त्ता गणके

निमित्तम् वेत्ति नैमित्तिकः । "न्यायादेः०" [६।२।११८] इति इकण् । निमित्तम्[1] मुहूर्त्तम् [2]च वेत्ति नैमित्तः मौहूर्त्तः[2] । "तद्वेत्त्यधीते" [६।२।११७] इत्यनेन उभयत्र 'अण्' प्रत्ययः । गणयति गणकः ज्योतिषिकः, तत्र ।

लिपौ ।

लिखिताऽपि

लिप्यते पत्रम् अनयेति लिपिः । स्त्रीलिङ्गः । "नाम्युपान्त्य०" [उ.६०९] इति किः । तत्र । लिख्यते पत्रम् अनयेति लिखिता । "कृशिपिपिशिपृषि०" [उ.२१२] इत्यादिबहुवचनात् किद् 'इतः' । क्तप्रत्ययो वा । लिखिरपि ।

मषी मेला

मषति हिनस्ति औज्ज्वल्यम् मषिः । "पदिपठिपचि०" [उ.६०७] इति 'इः' ङ्याम्, मषी । मेल्यते अनया मेलनम् वा मेला । "भीषिभूषिचिन्तिपूजि०" [५।३।१०९] इति बहुवचनाद् अङ् । यद् गौडः–

"मेला स्त्री मेलके मशौ, पत्राञ्जनमपि" । [ ]

"मसिः पत्राञ्जनं मेला" [ ] इति हारावली ।

प्रस्तावात् मेलानन्दा मसिमणिः इति मषीभाजननाम्नी अपि ज्ञेये । [3][वार्दलोऽपि । यदाह—

"क्लीबं दुर्दिवसे मेलानन्दायामपि वार्दलः" [ ] इति ।][3]

कुलिके कुलकोऽपि च ॥३६॥

कुलम् अस्त्यस्य कुलिकः । "अतोऽनेकस्वरात्" [७।२।६] इति इकः । तत्र । "कुल बन्धुसंस्त्यानयोः" कोलति कुलकः । "धुधून्दिरुचितिलिपुलिकुलि०" [उ.२९] इति किद् अकः । कुलम् कायतीति वा । "क्वचित्" [५।१।१७१] इति डः । इति क्षीरस्वामी । कुलश्रेष्ठिनाम्नी ॥३६॥

अष्टापदे बुधैः शारिफलकोऽपि निगद्यते ।

अष्टौ पदानि अत्र अष्टापदः । "नाम्नि" [३।२।७५] इति दीर्घत्वम् । तत्र । शारयः फलन्ति अत्र शारिफलम्, खेलनाधारश्चतुरङ्गफलकादिः । शारीणाम् फलम् इति

१ जे. मुहूर्त्तः । २–२ च वेत्ति नैमित्तः मौहूर्त्तः । जे. प्रतौ नास्ति पाठः ।
३–३ [ ] चिह्नान्तर्गतपाठो नास्ति प्रा. प्रतौ ।

वा शारिफलम् , के शारिफलकः। शारीणाम् फलक इति वा। पुंक्लीबलिङ्गः। बुधैः-पण्डितैः निगद्यते—कथ्यते।

**मनोजवस्ताततुल्ये**

"जु गतौ" सौत्रः। मनो जवतेऽस्मिन् पिता असौ इति धावति मनोजवः। मनोजे अभिलाषे वसतीति वा "क्वचित्" [५।१।१७१] इति डः। ताततुल्यः पितृसदृशः, तत्र। यदाह **व्याडिः**—

"जनः पितृसधर्मा यः स ताताहों मनोजवः।" [ ] इति।

**प्रभविष्णुरपि क्षमे ॥३७॥**

प्रभवति इत्येवंशीलः प्रभविष्णुः। "भ्राज्यलंकृग्निराकृग्भूसहि०" [५।२।२८] इति इष्णुः प्रत्ययः। क्षमते सहते क्षमः समर्थः, तत्र ॥३७॥

**जाङ्घिके जाङ्घाकरोऽपि च**

जङ्घाभ्याम् जीवति जाङ्घिकः, तत्र। वेतनादित्वात् इकण्। जङ्घा एव करो राजदेयोऽस्त्यस्य जङ्घाकरः। जङ्घाभ्याम् आजीविकाम् करोतीति वा जङ्घाकरः। स्वार्थे अणि, जाङ्घाकरः[1]। लोके यस्य "कासीद" इति प्रसिद्धिस्तन्नाम।

**अनुगोऽप्यनुगामिनि।**

अनुगच्छतीति अनुगः। "नाम्नो गमः खड्डौ च०" [५।१।१३१] इति डः। अनुगच्छति इत्येवंशीलः अनुगामी सेवकः, तत्र। 'अजातेः शीले" [५।१।१५४] इति णिन्। श्लिकु-लिगु-वराट-पदपदा अपि।

**पर्येषणोपासनापि शुश्रूषायामधीयते ॥३८॥**

"इषच् गतौ" पर्येषणम् पर्येषणा। "पर्यधेर्वा" [५।३।११३] इति अने साधुः। उपासनम् उपासना। "णिवेत्त्यासश्रन्थघट्टवन्देरनः" [५।३।१११] इति अनः। "श्रुट् श्रवणे," "गतौ" इत्यन्ये। शुश्रूषणम् शुश्रूषा तस्याम्। "शंसि प्रत्ययात्" [५।३।१०५] इति अः। अभिधीयते—कथ्यते बुधैरिति गम्यम्। निषेवणम् अपि ॥३८॥

**आतिथ्योऽप्यतिथौ**

अतति सततम् गच्छति आतिथ्यः। "शिक्यास्याढ्यमध्यविन्ध्य०" [उ.३६४] इति यान्तो निपात्यते। अतिथिरेव वा। "भेषजादिभ्यष्ट्यण्" [७।२।१६४] इति स्वार्थे ट्यण्। "आतिथ्योऽतिथिरागन्तुः" [ ]इति **माला**। अतति—सततं

1. जे. प्रतौ– 'स्वार्थे अणि, जाङ्घाकरः, इति पाठो नास्ति।

गच्छति अतिथिः । "अतेरिथिः"[उ.६७२] इति इथिः । नास्ति तिथिः अस्येति वा अतिथिः प्राघूर्णकः तत्र ।

"तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना ।
अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः ।" [ ]इति **वचनप्रामाण्यात्** ।
"अध्वनीनोऽतिथिर्ज्ञेयः" [ ]इति च **स्मृतिः** । स्त्रियां च 'अतिथि' इत्याहुः ।

**कुल्येऽभिजः**

कुलस्याऽपत्यं कुल्यः । "यैयकञावसमासे वा" [६।१।९७] इति यः । अभिजातोऽभिजः । "क्वचित्" [५।१।१७१] इति डः । कुलीननाम्नी ।

**गोत्रं तु सन्ततिः ।**

गूयते कथ्यतेऽनेन गोत्रम्, अन्वयः । "हुयाभा०"[उ.४५१] इति त्रः । सन्तन्यते सन्ततिः । "स्त्रियां क्तिः" [५।३।९१] इति क्तिः ।

**महेला योषिता च स्त्री**

"मह पूजायाम्" मह्यते महेला । "महेरेलः" [उ.४९२] इति एलः । "युष भजने" सौत्रः । योषति पुरुषम् योषित् । "हृसृरुहियुषि०" [उ.८८७] इति इत् प्रत्ययः । अजादित्वाद् आपि....योषिता । "जुष परितर्कणे" "जोषयतीति जोषा"[ ] इति **चन्द्रेण** चवर्गादिरुक्तः । स्तृणाति धर्मम्, स्त्यायति अस्यां गर्भ इति वा स्त्री । "स्त्री स्यतेः०" [उ.९१५] इति त्रट् प्रत्ययः ।

**तरुणी युवतीत्यपि ॥३९॥**

तरति कौमारम् वयः तरुणी । "यम्यजि०" [उ.२८८] इति उनः । "वयस्यनन्त्ये" [२।४।२१] इति ङीः । "युंक् मिश्रणे" यौति युवती । "योः कित्" [उ.६५८] इति अतिः । "इतोऽक्त्यर्थात्" [२।४।३२] इति वा ङीः ॥३९॥

**स्ववासिनी चरिण्टी च चिरिण्टी च चरण्ट्यपि ।**

**वधूट्याम्**

स्वस्मिन् आत्मनि वसति इत्येवंशीला स्ववासिनी इति **द्रमिलाः** । "चिरिः सौत्रः स्वादिः" । चिरिणोति चरिण्टी चिरिण्टी च । "हिण्टश्चर् च वा" [उ.१५०] इति चिरेः डित् इण्टः प्रत्ययः, चर् इत्यादेशोऽस्य वा भवति । चरति आत्मनि चरण्टी । "कपटकीकटादयः" [उ.१४४] इति अटे निपात्यते । सर्वत्र "वयस्यनन्त्ये" [२।४।२१] इति ङीः । बध्नाति कटाक्षैर्वधूटी । "बन्धेः" [उ.१५७] इति कित् ऊटः । उह्यते वा वधूः । "वहेर्ध् च" [उ.८३२] इति । "वहीं प्रापणे" इत्यस्माद्

ऊः प्रत्ययो धश्चान्तादेशो भवति । ततो वधूरेव वधूटी । लक्ष्यानुरोधात् टः । यथा स्वर्गग्रामटी कर्कटी इति पृषोदरादित्वाद् वा अटः प्रत्ययः । तस्याम् । वधूटी इत्यपि व्याडिः ।

**पत्न्यां कराती गेहिनी सहधर्म्मिणी ॥४०॥**

**सधर्मचारिणी चापि**

पत्नीति पतिशब्दाद् "ऊढायाम्" [२।४।५१] इति ङीः, नकारश्चान्तादेशः। तस्याम् । करो हस्त आत्तोऽस्याः, करे आत्ता वा कराती । एवं करगृहीती, पाणिगृहीती, पाण्यात्ती[1] । "पाणिगृहीतीति" [२।४।५२] इत्यनेन ङ्यन्तो निपात्यते। गेहम्-गृहम् अस्त्यस्या गेहिनी । सह धर्मोऽस्त्यस्याः सहधर्मिणी । सह धर्मं चरति इत्येवंशीला सधर्मचारिणी, यज्ञादौ सहाधिकारित्वात् ।

**स्नुषायां तु वधूट्यपि ।**

स्नौति अपत्यवात्सल्यात् स्नुषा । "स्नुपूसूम्वर्कल्लभ्यः कित्" [उ.५४२] इति कित् षः । तस्याम् । बध्नाति वधूटी । "बन्धे" [उ. १५७] इति कित् ऊटः । "वयस्यनन्त्ये" [२।४।२१] इति ङीः ।

**प्रेमवत्यपि कान्तायाम्,**

प्रेम विद्यते अस्याः प्रेमवती । "तदस्यास्त्यस्मिन्निति मतुः" [७।२।१] इति मतुः । काम्यते कान्ता वल्लभा प्रिया तस्याम् ।

**पाणिग्राहो विवोढरि ॥४१॥**

**परिणेतोपयन्ता च**

पाणी गृह्णातीति पाणिग्राहः । "कर्मणोऽण्" [५।१।७२] इति अण् । विवहति परिणयति विवोढा भर्ता, तत्र । परिणयति परिणेता । तृन् । उपयच्छते उपयन्ता । अनुस्वारेत्त्वान्नेट् ।

**यौतके दाय इत्यपि ।**

युतयोः—वधूवरयोरिदं यौतकम्, तत्र । दीयते दायः । यत् शाश्वतः—"यौतकादिधनं दायो दायो दानमुदाहृतम्" । [ ] इति । यौतुकम् अपि ।

**दीधीषूर्दिधिषूः**

"ञिधृषाट् प्रागल्भ्ये" धृष्णोति दीधीषूः दिधिषूश्च । "धृषेर्दिधिष् दीधीषौ च" [उ. ८४२] इति 'ऊ' प्रत्ययः, धातोश्च दिधिष् दीधीष् इत्यादेशौ भवतः । यद्

---

१. जे. पण्यात्ती ।

वा, "दिधि धैर्यम्" इन्द्रियदौर्बल्यात् स्यति त्यजति इति दिधिषूः । "अन्दूदृन्भूजम्बू०" [पा. उ. ९६] इति **पाणिनीयोणादिसूत्रेण** निपातनात् साधुः । पुनर्भूस्त्रीनाम्नी ।

**जीवत्पत्नी जीवत्पतिः समे ॥४२॥**

जीवन् पतिरस्याः जीवत्पत्नी जीवत्पतिश्च । "पत्युर्नः" [२।४।४८] इत्यनेन पत्यन्ताद् बहुव्रीहेः स्त्रियां ङीर्वा भवति । तत्सन्नियोगेऽन्तस्य नकारादेशश्च ॥४२॥

**तुल्ये अवीरानिर्वीरे**

न विद्येते वीरौ—पतिपुत्रौ अस्याः अवीरा । निर्गतौ वीरौ— पतिपुत्रौ अस्याः निर्वीरा । निष्पतिसुता स्त्री, तन्नाम्नी । तुल्ये—समाने ।

**श्रवणा-श्रमणे तथा ।**

शृणोति श्रवणा । "तृकृश्रृपृभृवृश्रुरुरुहि०" [उ.१८७]इति अणः । श्राम्यति तपसा श्रमणा । "नन्द्यादिभ्योऽनः" [५।१।५२] इति अनः ।

**रण्डापि विधवा**

रमते रण्डा । "पञ्चमाड्डः" [उ. १६८] इति डः । विगतो धवो भर्ताऽस्या विधवा ।

**पुष्पवती स्यात्पुष्पिताऽपि च ॥४३॥**

पुष्पम् विद्यतेऽस्याः मतौ पुष्पवती । "पुष्पम् जातमस्यां पुष्पिता" इति **माला** । तारकादित्वाद् 'इतः' ॥४३॥

**पुष्पे कुसुममप्युक्तम्**

"पुष्पच् विकसने" दैवादिकः[1] । पुष्यति पुष्पम् । "अच्" [५।१।४९] इत्यच् । तत्र "कुसच् श्लेषे" कुस्यति कुसुमम् । "उद्वटिकुल्यलिकुथिकुरिकुटिकुडिकुसिभ्यः कुमः" [उ.३५१] इति किद् उमः ।

**पशुधर्मोऽपि मोहने ।**

पशूनाम् अविवेकिनाम् धर्मः पशुधर्मः । मुह्यन्ति इन्द्रियाणि अत्र मोहनम्—सम्भोगः, तत्र । "अनट्" [५।३।१२४] इति अनट् ।

**सहोदरे सगर्भ्योऽपि स्यात्**

सह तुल्यम् उदरम् अस्य सहोदरः, तत्र । समाने गर्भे भवः सगर्भ्यः । "भवे" [६।३।१२३] इति यः प्रत्ययः । "सगर्भसयूथसनुताद् यत्" [पा.४।४।११४] **पाणिनीयव्याकरणसूत्रेण** 'यत्' प्रत्यये वा साधुः । छान्दसोऽपि लोकेऽभिधानात् । यदाह **अमरः**—

---

१. प्रा. दिवादिः ।

"समानोदर्यसोदर्यसगर्भ्यसहजाः समाः" । [अ.२।६।३४] इति ।

**अग्रजवदग्रिमः ॥४४॥**

अग्रे जातो अग्रजः । "क्वचित्" [ ५।१।१७१ ] इति डः । अग्रे भवो अग्रिमः । "पश्चादाद्यन्ताऽग्रादिमः" [ ६।३।७५ ] इति इमः प्रत्ययः ॥४४॥

**शण्ठः शण्ढः पण्डुरपि क्लीबः**

शाम्यति शण्ठः । "शमेर्लुक् च वा" [उ. १६५] इति ठः प्रत्ययः । शाम्यति शण्ढः । "शमिषणिभ्यां ढः" [ उ. १७९ ] इति ढः । "पडुङ् गतौ" पण्डते पण्डुः । "पृकाहृषिधृषीषिकुहि०" [उ. १२९] इत्यादिशब्दात् कित् उः । "क्लीबृङ् अधाष्ट्र्ये" अचि, क्लीबते क्लीबो नपुंसकस्तन्नामानि ।

**माता जनित्र्यपि ।**

मान्यते माता । "मानिभ्राजेर्लुक् च" [ उ. ८५९ ] इति तृः । जायतेऽस्यां जनित्री । "वन्धिवहि०" [ उ. ४५९] इत्यादिशब्दाद इत्रः । यद् वा, जनयति जनित्री । शतृप्रत्ययः । "या जनित्री त्रिलोक्या" इत्यन्तर्भावितण्यर्थत्वात् ।

**चिहुरा अपि केशाः स्युः**

चकन्ते चिहुराः । "श्वशुरकुकुन्दुर०" [ उ. ४२६ ] इति 'उर'प्रत्ययान्तो निपात्यते । यदाह हुग्रः ( ? दुर्गः )—

"कुन्तला मूर्द्धजास्त्वस्राश्चिकुराश्चिहुरा" इति । [ ] क्लिश्यते एभिः केशाः । "क्लिशः के च" [ उ. ५३० ] इति शः । शिरोजः[1], अङ्गजः शिरोरुहः च ।

**कर्णः शब्दग्रहोऽपि च ॥ ४५ ॥**

कर्ण्यते आकर्ण्यते अनेन कर्णः । किरति अनेन वा । "इणुर्विशावेणि०" [ उ. १८२ ] इति णः प्रत्ययः । शब्दो गृह्यते अनेन शब्दग्रहः । शब्दम् गृह्णाति वा अजन्तः ॥ ४५ ॥

**नेत्रं विलोचनमपि**

नीयते दृश्यम् अनेनेति नेत्रम् । पुंक्लीबः । "नीदा०" [५।२।८८] इति त्रट् । "लोचृङ् दर्शने" विशेषेण लोच्यते अनेन विलोचनम् । "अनट्" [ ५।३।१२४ ] इति अनट् । प्यात्वम् पेत्वम् कणीचिः, अक्षा, तारकम् चापि ।

**सृक्वणी सृक्विणी अपि ।**

सृजतो लालां सृक्वणी । "सृजेः स्रज् सृकौ च" [ उ. ९०७ ] इति क्वनिप्, धातोः सृग् इत्यादेशश्च । "छविच्छिवि०" [उ. ७०६] इति 'वि' प्रत्यये निपातनात

---

१. जे. प्रतौ–शिरोजः नास्ति ।

सृक्विणी । "प्रान्तौ ओष्ठस्य सृक्विणी" [ २।६।९१ ] इति **अमरः** । क्लीबलिङ्गः । ओष्ठपर्यन्तनाम्नी ।

**दाढिका द्राढिकाऽपि स्यात्**

दाढाप्रतिकृतिर्दाढिका । द्राढाप्रतिकृतिर्द्राढिका । "तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः" [ ७।१।१०८ ] इत्युभयत्र कः ।

**कपोणिस्तु कफोणिवत् ॥ ४६ ॥**

[ कीकं ] फणति–गच्छति कपोणिः कफोणिश्च । उभावपि पृषोदरादित्वात् साधू । 'वत्' अर्थः एवम्, यथा कफोणिशब्दः कूर्परवाची तथा कपोणिरपीति ॥४६॥

**कूर्परे कुर्परः**

"कृपौङ् सामर्थ्ये" कल्पते कूर्परः । "कुरत् शब्दे" कुरति कूर्परः । उभावपि "जठरकर्कर०" [ उ. ४०३] इति अरे साधू । तस्मिन् कूर्परे भुजामध्ये ।

**सिंहतलः संहतलोऽपि च ।**

"तलण् प्रतिष्ठायाम्" णिचोऽनित्यत्वाद् अचि तलति तलः, सिंहस्य इव तलः सिंहतलः, सिंहो हि मिलिताभ्यां चपेटाभ्यां हन्ति । संहतम्–संघट्टं लातीति संहतलः संहतलाख्यः ।

**चलुकोऽपि चलुः**

चलति चलुः । पुंल्लिङ्गः । "भृमृतॄ०" [ उ. ७१६ ] इति बहुवचनाद् उः "स्वार्थिके के प्रत्यये चलुकः । प्रसृतद्रवाधारः ।

**मुष्के स्यादाण्डः पेलकोऽपि च ॥ ४७ ॥**

अणति शब्दायते अत्राऽऽहतः प्राणी आण्डः । "कण्यणिखनिभ्यो णिद्वा" [ उ. १६९ ] इति वा णित् डः प्रत्ययः । पेलति ऊर्ध्वम् गच्छति भयेनेति पेलम् । स्वार्थिके के, पेलकः । मुष्णाति शुक्रम् मुष्कः । पुंक्लीबलिङ्गः । "विचिपुषि०" [उ. २२] इति कित् कः । तत्र । स्याद् भवेत् ॥ ४७ ॥

**पत्पादङ्घ्रिश्च चरणे**

"पदिंच् गतौ" पद्यते पत् । "क्रुत्सम्पदादित्वात् क्विप्" [५।३।११४]। यदाह **व्याडिः**— 'पत्पादोऽङ्घ्रिश्चरणोऽस्त्री' [ ] इति

पादयति पाद् । णौ क्विप् । 'द्'अन्तोऽयम् पुंसि । यदाह **दुर्गः**—

पादसमानार्थः पादप्यस्ति ।

'अघुङ् गत्याक्षेपे" अङ्घते अनेनेति अङ्घ्रिः । पुंल्लिङ्गः । 'तङ्कवङ्किअङ्कि-मङ्किअंहि०" [उ. ६९२ ] इत्यनेन अङ्घेरऽपि रिः प्रत्ययः । चरन्ति अनेन चरणः ।

पुंक्लीबलिङ्गस्तत्र । "तृकृशृपृ०" [उ. १८७] इत्यादिना अणः प्रत्ययः । पद्वापि दन्तोऽयम् ।

कीकसं हड्डमित्यपि ।

कीति कसति कीकसम् । ककन्ते अत्र श्वान इति वा । "फनस०" [उ.५७३] इति असे निपात्यते । "हड्ड सौत्रो धातुः" हडति हड्डम् "कुगुहुनीकुणी०" [उ. १७०] इत्यादिशब्दात् किद् डः । यदाह वैजयन्ती–

"अथास्थिकीकसं हड्डम्" [ ] इति । देश्याम् अपि ।

कपालं शकलमपि

"कपिः सौत्रः" कप्यते कपालम् । पुंक्लीबलिङ्गः । "ऋकमृ०" [उ.४७५] इति आलः । कम् पालयति वा । तच्च मूर्ध्नोऽर्द्धास्थि, घटादिखण्डेऽप्युपचारात् । "शक्लृंट् शक्तौ" शक्नोति शकलम् । "मृदिकन्दिकुण्डिमण्डिमङ्गिपण्टिपाटिशकि०" [उ. ४६५] इति अलः ।

पृष्ठास्थनि कशारुका ॥४८॥

पृष्ठस्याऽस्थि पृष्ठास्थि, तत्र । "कश् शब्दे" तालव्यान्तः । सौत्रोऽयमिति एके । कश्यते कशारुः । "कृपिक्षुधिपीकुणिभ्यः कित्" [उ.८१५] इति बहुवचनाद् आरुः । के, कशारुका । स्त्रीक्लीबलिङ्गः ॥४८॥

मज्जायामस्थितेजोऽपि

मज्यन्तेऽनया अस्थीनि इति मज्जा । भिदादित्वाद् अङ्, "सस्य शपौ" [१।३।६१] इति "टुमस्जोंत् शुद्धौ" इत्यस्य धातोः सस्य शे, "तृतीयस्तृतीय०" [१।३।४९]इति शकारस्य जे मज्जा इति रूपसिद्धिः[1] । स्त्रीलिङ्गः । तस्याम् । अस्थनि तेजोऽस्य अस्थितेजः । मज्जति अस्थनि मज्जा इत्यपि । "उक्षितक्षि०" [उ.९००] इति अन् । पुंसि अयम् । वाचस्पतिस्तु—"अथ मज्जा द्वयोः"[ ] इति एनं स्त्रियामप्याह ।

नाडीषु नाडिनाटिकाः ।

नडस्येव एताः नाड्यः शौषिर्यात् । नडेः सौत्रस्य वा घञ्प्रत्ययस्तासु । "नडिः" सौत्रः । नडन्ति नाडयः । "कमिवमिजमि०" [उ. ६१८] इति बहुवचनात् णित् इः । "नटण् अवस्यन्दने" घञि नाटयः, के, नाटिकाः । नाडय एव नाडिका इति एके पेठुः ।

शिङ्घाणकोऽपि शिङ्घाणः

---

१. जे. रूपसिद्धः ।

"शिघु आघ्राणे" तालव्यादिः । शिङ्घ्यते शिङ्घाणकः । "धाल्हशिङ्घिभ्यः" [उ.७०] इति आणकः प्रत्ययः । शिङ्घते शिङ्घाणः । "बहुलम्" [५।१।२] इति आणः । सिंहाणम् अपि । नासिकामलनाम्नी ।

**सृणीका सृणिकाऽपि च ॥४९॥**

सरति गच्छति मुखात् सृणीका । "सृणीकाऽस्तीक०" [उ.५०] इति इके निपात्यते । "कुशिकहृदिकमक्षिक०" [उ.४५] इति इकप्रत्यये निपातनात् सृणिका लाला तन्नाम्नी ॥४९॥

**शान्तः पान्तश्च विड् गूथेऽशुचि**

"विशंत् प्रवेशने" विशति पक्वाशये विट् । "विष्लृंकी व्याप्तौ" वेवेष्टि अन्त्रम् विट् । शान्तः शकारान्तः, षान्तः षकारान्तश्च ।

शान्तपक्षे रूपाण्येवम्—विट्, विड्, विशौ, विशः । षान्तपक्षे यथा—विट्, विड्, विषौ, विषः । स्त्रीलिङ्गः । वैजयन्तीकारस्तु—"उच्चारो विट् नना'[ ]इति" क्लीबेप्याह । अमरस्तु—"विष्ठाविषौ स्त्रियाम्" [ २।६।६८ ] इति मूर्धन्यम् षम् आह । गूयते उत्सृज्यते गूथम् । पुंक्लीबलिङ्गः । "पथयूथ०" [ उ. २३१ ] इति थे निपात्यते । तत्र । न शुचि अशुचि । क्लीबलिङ्गः । आरालम् अपि । दीर्घादिरयम् ।

**वेशोऽपि वेषवत् ।**

"विशंत् प्रवेशे" विशति चेतोऽत्र वेशः, तालव्यान्तः । "पदरुज०" [५।३।१६] इति घञ् । वेवेष्टि अङ्गम् वेषः । वस्त्रालङ्कारमाल्यप्रसाधनैरङ्गशोभा । यथा वेषशब्दो नेपथ्ये वर्तते तथा वेशोऽपि ।

**उत्सादनोच्छादनौ च**

"षद्लृ विशरणगत्यवसादनेषु" उत्साद्यते मलोऽनेन उत्सादनम्, उद्वर्तनम् । "छंदण् अपवारणे" उच्छाद्यतेऽनेन उच्छादनम् । उभयत्र "अनट्" [५।३।१२४] इति अनट् ।

**आप्लवाप्लावौ तथा समौ ॥ ५० ॥**

"प्लुंङ् गतौ" आप्लवनम् आप्लवः आप्लावः । "आङो रुप्लोः" [५।३।४९] इति वा अल् प्रत्ययः । स्नाननाम्नी ॥५०॥

**वंशकं कृमिजग्धं चागुरौ स्यात् ।**

वंशप्रतिकृति वंशकम् इति **अमरटीका** । "तस्य तुल्ये कः संज्ञाप्रतिकृत्योः" [७।१।१०८] इति कः । कृमिभिर्जग्धम् कृमिजग्धम् । **यदाहुः**

"अगुरु प्रवरलोहं कृमिजग्धमनार्जकम्"। इति न गुरुः अगुरुः। पुंक्लीबलिङ्गस्तत्र।

अथ वाल्हिकम्।

संङ्कोचं पिशुनं वर्ण्यमसृक्संज्ञं च कुङ्कुमे ॥ ५१ ॥

"वर्हि वल्हि प्राधान्ये" वल्हते वल्हिः। "पदिपठि०" [उ.६०७] इति इः। बाहुलकाद् दीर्घे, वाल्हयः। स्वार्थिके के, वाल्हिकाः देशस्तेषु भवं वाह्लिकम्। "कोपान्त्यात्०" [६।३।५६] इति अण्।

"कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु" संकोचति कुटिलीभवति संङ्कोचम्। "अच्" [५।१।४९] इत्यच्। "पिशंत् अवयवेऽपि" पिशति पिशुनम्। "पिशिमिथिक्षुधिभ्यः कित्" [उ. २९०] इति किद् उनः। वर्ण्यते वर्ण्यम्। "य एच्चाऽऽतः" [५।१।२८] इति यः। असृक्संज्ञाऽस्य असृक्संज्ञम्। "कुकि आदाने" कुक्यते कुङ्कुमम्। "कुन्दुमलिन्दुमकुङ्कुमविद्रुमपट्टुमादयः" [उ. ३५२] इति 'कुम'-प्रत्ययान्तो निपात्यते। क्लीबलिङ्गोऽयम्। वाचस्पतिस्तु "निदाघेऽपि कुङ्कुमः सुखः स्यात्" इति पुंस्याह। तत्र अग्निशिखम्, कश्मीरजम्, हरिचन्दनम् असृक् च ॥५१॥

जापके कालानुसार्यम्।

जापकाद्विभवत्वात् जापकम् कालीयकम्, तत्र कालायाम् भूमौ अनुसार्यते कालानुसार्यम्।

यावनोऽपि च सिल्हके।

यवनदेशे भवो यावनः। "भवे" [६।३।१२३] इति अण्। "सिलत् उञ्छे" दन्त्यादिः। सिलति सिल्हः। "बहुलम्" [५।१।२] इति हः। सिलम् जहाति इति वा। "क्वचित्" [५।१।१७१] इति डः, के, सिल्हकम्, तत्र।

मकुटोऽपि च कोटीरे।

"मकुङ् मण्डने" मङ्कयते मण्ड्यते शिरोऽनेन मकुटम्। "मङ्केर्मकमुकौ च" [उ. १५४] इति उटः, मङ्केश्च मक् इत्यादेशः। "कुटत् कौटिल्ये" कुटति कोटीरम्। "कृशॄपॄगॄमञ्जिकुटि०" [उ. ४१८] इति ईरः। बाहुलकाद् गुणः, तत्र तिरीटम् अपि।

चित्रकं च विशेषके ॥ ५२ ॥

चित्र्यते शिरोऽनेन चित्रम्, के, चित्रकम्। क्लीबलिङ्गः। विशिनष्टि ललाटम् विशेषकम्। पुंक्लीबलिङ्गः। तिलकस्तत्र ॥५२॥

वतंसोऽप्यवतंसे स्यात्।

"भूष तसु अलङ्कारे" अवतंस्यतेऽनेन अवतंसः।

"व्यञ्जनाद् घञ्" [५।३।१३२] "वाऽवाप्योस्तनिक्रीधाग्नहोर्वपी" [३।२।१५६] इति अवस्य 'व' आदेशे वतंसः। अवतनोति शोभाम् इति अवतंसः, तत्र। "व्यवाभ्यां तनेरीच्च वेः" [उ. ५६५] इति सः । वीतंसोऽपि।

**पत्रभङ्ग्यां तु पण्डितैः।**

**पत्राद् वल्लरी तत्र मञ्जरी च तथोदिता ॥५३॥**

पत्राकृतिर्भङ्गिः पत्रभङ्गिः। "इतोऽक्त्यर्थात्" [२।४।३२] इति ङ्याम् पत्रभङ्गी, तस्यां पत्रभङ्ग्याम्–पत्रलेखायाम्। स्त्रीणां कपोल-स्तनमण्डलादिषु कस्तूरिकादिभिः पत्ररचनायामित्यर्थः। पत्रात् पत्रशब्दादग्रे वल्लरी इति प्रयोज्यते तत एवं, पत्राकृतिर्वल्लरी पत्रवल्लरी। पत्राकृतिर्मञ्जरी पत्रमञ्जरी। पण्डितैः उदिता–कथिता॥ ५३ ॥

**कर्णान्दूरपि कर्णान्दुः।**

कर्णयोः अन्यते बध्यते कर्णान्दूः। "कृपिचमितनिधन्यन्दि०" [उ. ८२९] इति ऊः प्रत्ययः। इति **वैजयन्तीकारः**। "भृमृतृत्सरि०" [उ. ७१६] इति बहुवचनाद् 'उ'प्रत्यये कर्णान्दुः। [1]उत्क्षिप्तिका कर्णलालिका इत्यन्ये। यदाहुः—

"उत्क्षिप्तिकायां कर्णान्दुः कर्णपाश्यामपि स्त्रियाम्"। [ ]

इति। द्वयोरपि यथा–"सुवर्णकर्णान्दुविलोलकर्णा।" [ ]

**परिहार्योऽपि कङ्कणम्।**

परि–सर्वतोभावे ह्रियते परिहार्यः। "ऋवर्णव्यञ्जनाद् घ्यण्" [५।१।१७] इति घ्यण्। कङ्कते याति हस्तम् कङ्कणम्। "तृकृशॄपॄभॄवृश्रुरुहिरु०" [उ.१८७] इति अणः। प्रतिसरः।

**किङ्कणी कङ्कणी तुल्ये।**

कङ्कते याति कटीम् किङ्कणिः कङ्कणिश्च। "कङ्केरिच्चास्य वा" [उ. ६३९] इति अणिः, धातोः अकारस्य च इकारो वा भवति। ङ्याम् किङ्कणी कङ्कणी,[2] किङ्किणीका इत्यपि।

**आच्छादाच्छादने समे॥ ५४ ॥**

आच्छाद्यतेऽनेन आच्छादः। "युवर्ण०" [५।३।२८] इति अल्। आच्छादनम्। "करणाऽऽधारे" [५।३।१२९] अनट् इति अनट्। वस्त्रनाम्नी ॥५४॥

**कूर्पासोऽप्यङ्गिका।**

---

१. जे. प्रतौ. 'उत्क्षिप्तिका कर्णलालिकेत्यन्ये। यदाहुः' इति पाठो नास्ति।

२. जे. 'कङ्कणी' नास्ति।

"कुरत् शब्दे" कुरति कूर्पासः । "कृकुरिभ्यां पासः" [उ. ५८३] इति पासः । कूर्परे अस्यते वा, पृषोदरादित्वात् साधुः । अङ्गस्य प्रतिकृतिरिति अङ्गिका । "तस्य तुल्ये कः संज्ञाप्रतिकृत्योः" [७।१।१०८] इति कः । कञ्चुलिकानाम्नी ।

**कक्षापटे कक्षापुटोऽपि च ।**

कक्षयोः पटः कक्षापटः, कौपीनम् , तत्र कक्षयोः पुटः कक्षापुटः ।

**कुथे वर्णपरिस्तोम इत्यखण्डं जगुः परे ॥५५॥**

**तत्रास्तरणमिति च**

कुथ्यते क्लिश्यते कुथः स्थादित्वात् कः । क्रियते कार्यते वा "पथयूथ०" [उ.२३१] इति थे निपात्यते । तत्र वर्ण्यते वर्णः । परिस्तोम्यते प्रस्तीर्यते[2] परिस्तोमः । वर्णश्चासौ परिस्तोमश्च वर्णपरिस्तोमः । अखण्डम् परिपूर्णम् जगुः—ऊचुः अपरे आचार्याः ॥५५॥ तत्र कुथे "स्तॄगृश् आच्छादने" आस्तीर्यते हस्तिपृष्ठम्[3] अनेन आस्तरणम् । "करणाऽऽधारे" [५।३।१२९]इति अनट् ।

**पल्यङ्कोऽप्यवसक्थिका ।**

पर्यञ्च्यते पर्यङ्क्यते वा पल्यङ्कः । "परेर्घाङ्क०" [२।३।१०३] इति लत्वम् । सक्थिप्रतिकृतिः सक्थिका, यष्टिः । अव आलम्बने अव्ययम् । अव आलम्बनार्थम् सक्थिका अत्र अवसक्थिका । अवनद्धे अवकृष्टे वा सक्थिनी अस्याम् अवसक्थिका । "सक्थ्यक्ष्णः स्वाङ्गे" [७।३।१२६] इति समासान्तः टः प्रत्ययः, टित्त्वात् ङीः, ततः स्वार्थे कः प्रत्ययः ।

**यमन्यपि प्रतिसीरा**

"यमू उपरमे" यच्छन्ति अस्याम् यमनी । यम्यतेऽनया वा अनट् । प्रतिसिन्वन्ति एनाम् प्रतिसीरा । "चिजिशुसि०" [उ.३९२] इति रः ।

**स्रस्तरः प्रस्तरोऽपि च ॥५६॥**

स्रंसते अत्रेति स्रस्तरः । "जठर०" [उ.४०३] इति अरे निपात्यते । प्रकर्षेण स्तीर्यते प्रस्तरः, पल्लवपत्रादिरचिता शय्या ॥५६॥

**प्रतिग्रहपतद्ग्राहावपि स्यातां पतद्ग्रहे ।**

प्रतिगृह्णाति आवेलकादि प्रतिग्रहः । पतद् गृह्णाति पतद्ग्राहः । "वा ज्वलादि०"[५।१।६२] इति णः । स्याताम्—भवेताम् । पतद् गृह्णाति पतद्ग्रहः, तत्र ।

**मुकुरोऽप्याऽऽत्मदर्शे—**

---

१. जे. स्थादित्वात् साधुः । २. प्रा. प्रस्तार्यते । ३. प्रा. "हस्तिपृष्ठम्" नास्ति ।

मङ्क्यते मण्ड्यते वपुः अनेन मुकुरः। "मङ्केर्न लुक् वोचास्य" [उ.४२४] इति। "मकुङ् मण्डने" इत्यस्य उरः प्रत्ययः नकारस्य लुक्, अकारस्य च वा उकारः स्यात्। आत्मा दृश्यते अनेन आत्मदर्शो दर्पणः, तत्र।

**अथ कशिपुः कसिपुः समौ ॥५७॥**

कसति गच्छति क्लेशोऽनेन कसिपुः। पुंक्लीबलिङ्गः। "कश शब्दे" कशति क्लेशम् कशिपुः। तालव्यमध्य इति **अमरः**। उभयत्र "कस्यर्त्तिभ्यामिपुक्"[उ.-७९८] इति इपुक् ॥५७॥

**यावकालक्तकौ यावे**

याव एव यावकः। "यावादिभ्यः कः" [७।३।१५] इति स्वार्थे कः प्रत्ययः। न लज्जते अलति दीप्यते वा अलक्तः। "पुतपित्त०"[उ. २०४] इति ते निपात्यते। यद्वा ईषद् रक्त अरक्तस्ततो रस्य लत्वम्। "यावादिभ्यः कः" [७।३।१५] इति स्वार्थिके के, अलक्तकः। यूयते यौति मिश्रीभवति वा यवः। स एव "प्रज्ञादि०" [७।२।१६५] अणि, यावः, तत्र। **यद् धनपालः**—

"तद्रागो यावकोऽलक्तकः स्मृतः"।

**अमरादयस्तु**—"यावालक्तौ लाक्षादिभिः सहैकार्थौ"[ ][1] आहुः।

**तुल्ये व्यजनवीजने।**

व्यजन्ति विक्षिपन्ति वातम्[2] अनेन व्यजनम्, तालवृन्तम्। अनट्। "ईजि कुत्सने च, चकाराद् गतौ" विशेषेण ईज्यते प्रेर्यते वीजनम्। "अनट्"[५।३।१२४] इति अनट्। "वीजण् व्यजने" अनटि, इत्यस्य वा रूपम्[3]। तुल्ये—समे।

**गिरीयको गिरिकोऽपि बालक्रीडनके मतौ ॥५८॥**

गीर्यते याति च गिरीयकः। पृषोदरादित्वात् साधुः। गीर्यते गिरिः। "नाम्युपान्त्यकॄगॄ०" [उ.६०९] इति किद् इः, स्वार्थिके के, गिरिकः। बालाः क्रीडन्ति अनेन बालक्रीडनम्, स्वार्थिके के बालक्रीडनकम्, तत्र, मतौ—सम्मतौ ॥५८॥

**गेण्डुकोऽपि गेन्दुकः**

गाते गच्छति गाः—गच्छन् ईड्यते—स्तूयते गेण्डुकः। "कन्दुकांशुक०" [उ.५७] इति उके निपात्यते। गाः—गच्छन् इन्दुकः—गुडकः[4] गेन्दुकः, गगने इन्दुरिव वा पृषोदरादित्वात् साधुः। कन्दुः अपि।

---

१. जे. इत्यस्मात् रः। २. जे. वातमनोन। ३. प्रा. प्रतौ—'वीजण् व्यजने अनटि इत्यस्य वा रूपम्' इति नास्ति पाठः। प्रा. ४ 'गुडकः' नास्ति।

**राट् मूर्द्धावसिक्त इत्यपि ।**

राजते दीप्यते राट् राजा । मूर्द्धनि—मस्तके अवसिच्यते स्म मूर्द्धावसिक्तः ।

**भरतः सर्वदमनोऽपि**

बिभर्त्ति धरणीम् इति भरतः—दौष्यन्तिः । "दृपृभृ०" [उ. २०७] इति अतः । सर्वान् दमयति सर्वदमनः । "नन्द्यादिभ्योऽनः' [५।१।५२] इति अनः ।

**अथ दाशरथावुभौ ॥५९॥**

**रामचन्द्र-रामभद्रौ**

दशरथस्य अपत्यम् दाशरथिः । "अत इञ्" [६।१।३१] इति इञ् । तत्र दाशरथौ रामे । रमते रामः "वा ज्वला०" [५।१।६२] इति णः । चन्दति दीप्यते आह्लादयति वा चन्द्रः । "ऋज्यजि०" [उ. ३८८] इति कित् रः । रामश्चासौ चन्द्रश्च रामचन्द्रः । भन्दते मनोऽत्र भद्रः । "भन्देर्वा" [उ. ३९१] इति रो नलुक् । रामश्चासौ भद्रश्च रामभद्रः ।

**हनूमानपि मारुतौ ।**

हनुः अस्त्यस्य हनूमान् । "घञ्युपसर्गस्य बहुलम्" [३।२।८६] इति बहुलवचनात् दीर्घः । इन्द्रव्याकरणे तु "क्वचिन्मतौ दीर्घः" [ ] इत्यनेन सूत्रेण दीर्घः । "हनूः इति दीर्घोकारान्तोऽयम्" इति अन्ये । मारुतस्य अपत्यम् मारुतिः । "अत इञ्" [६।१।३१] इति इञ् । तत्र ।

**वाली सुग्रीवाग्रजोऽपि,**

वालयतीति वालिः । "स्वरेभ्य इः" [उ. ६०६] इति इः । तत्र सुग्रीवस्य अग्रजः सुग्रीवाग्रजः ।

**पार्थे बीभत्सुरित्यपि ॥६०॥**

पृथायाः—कुन्त्या अपत्यम् पार्थः अर्जुनः, तत्र बीभत्सते बीभत्सुः । "सन्-भिक्षाऽऽशंसेरुः" [५।२।३३] इति उः ॥६०॥

**सातवाहनवत् सालवाहनोऽपि प्रकीर्त्तितः ।**

सातम्—दत्तम् सुखम् वाहनम् अस्य सातवाहनः । सालस्य-देवदारुद्रुमस्य वाहनम् अस्य सालवाहनः । सालम्—लक्ष्मीदीप्तम् वाहनम् अस्येति वा । वदर्थः प्राग्वद् अवसेयः । प्रकीर्त्तितः कथितः बुधैरिति गम्यते ।

**परिच्छदे परिजनः परिबर्हणमित्यपि ॥६१॥**

परितश्छाद्यतेऽनेन परिच्छदः । "पुन्नाम्नि०" [५।३।१३०] इति घे, "एको-पसर्गस्य०" [४।२।३४] इति ह्रस्वः । परिवारः तत्र परितो जन्यतेऽनेन परिजनः ।

परिवर्ह्यते–वर्द्धचते परिवर्ह्यते[1] प्राधान्यम् भज्यते हिंस्यते वाऽनेन परिबर्हणम् । "करणाऽऽधारे" [५।३।१२९] इति अनट् । परिधायोऽपि ॥६१॥

**मन्त्री बुद्धिसहायोऽपि**

मन्त्रः कर्तव्यावधारणम् अस्त्यस्य मन्त्री। बुद्धया: सहायः–सखा बुद्धिसहायः। "मन्त्रिण् गुप्तभाषणे" "पदिपठिपचिरथलि०" [उ. ६०७] इति 'इ' प्रत्यये मन्त्रयति मन्त्रिः इत्यपि ।

**वेत्री वेत्रधरोऽपि च ।**

वेत्रम्–वेत्रदण्डः अस्त्यस्य वेत्री । वेत्रम् धरतीति वेत्रधरः ।

**हेमाध्यक्षे हैरिकोऽपि ।**

हेम्नः स्वर्णस्य[2] अध्यक्षः हेमाध्यक्षः । तत्र हिरण्ये नियुक्तो हैरिकः, इति **नैरुक्ताः** । "तत्र नियुक्ते" [ ६ । ४ । ७४ ] इति इकण् ।

**टङ्कपतिस्तु नैष्किके ॥ ६२ ॥**

टङ्कानाम्–दीनारादीनाम् पतिः टङ्कपतिः । निष्के–दीनारादौ नियुक्तो नैष्किकः। "तत्र नियुक्ते" [ ६ । ४ । ७४ ] इति इकण् ॥ ६२ ॥

**शुद्धान्ताध्यक्ष आन्तर्वेश्मिकान्तःपुरिकावपि ।**

शुद्धान्ते–अन्तःपुरे अध्यक्षः शुद्धान्ताध्यक्षः । अन्तर्वेश्मनि नियुक्तः आन्तर्वेश्मिकः । अन्तःपुरे नियुक्तः आन्तःपुरिकः । उभयत्र "तत्र नियुक्ते" [ ६।४।७४ ] इति इकण् ।

**सहाय–साप्तपदीनौ सख्यौ ।**

सह अयते चरति सहायः। सप्तभिः पदैः अवाप्यते साप्तपदीनः। "समांसमीन०" [ ७। १। १०५ ] इति ईनञि साधुः । सनोति सनति वा सखा–मित्रम्, तत्र । "सनेर्डखिः" [ उ. ६२५ ] इति डखिः । नन्तोऽपि ।

**असुहृदप्यरौ ॥ ६३ ॥**

न सुहृत्–मित्रम् असुहृत् । नास्ति शोभनम् हृदयम् अस्य वा । इयर्ति अरिः । "स्वरेभ्य इः" [उ. ६०६ ] इति इः । तत्र दुर्भिदः, भ्रातृव्यः, निगृहीतासिः, आततायी च ॥ ६३ ॥

**नये नीतिरपि ।**

नयनम् नयः । अल् । नयति शोभाम् वा । "अच्" [ ५।१। ४९ ] इति अच् । तत्र । नीयते नयनम् वा नीतिः । "स्त्रियां क्तिः" [ ५।३। ९१ ] इति क्तिः ।

---

१. जे प्रतौ–'वर्द्धयते परिवर्ह्यते' इति पाठो नोपलभ्यते । २. जे. सुवर्णस्य ।

**स्कन्धावारेऽपि शिविरो मतः ।**

चतुरङ्गसैन्यस्य प्रधानभूतत्वात् राजा स्कन्धस्तम् आवृणोति स्कन्धावारः, तत्र । कर्मणः अण् । "शव गतौ" तालव्यादिः । शवति चतुरङ्गसैन्यम् इति शिविरः । "शवशशेरिच्चातः" [ उ. ४१३ ] इति इरः, धातोः अकारस्य च इकारादेशः ।

**जयन्त्यपि वैजयन्त्यां पटाकाऽपि प्रकीर्त्तिता ॥ ६४ ॥**

जयति जयन्ती । "तृजीभूवदि०" [ उ. २२१ ] इति अन्तः । विजयन्तस्य इयम् वैजयन्ती । "तस्येदम्" [६।३।१६०] इति अण् । "अणञेये०" [२।४।२०] इति ङीः । तस्याम् । "पट गतौ" पटति पटाका । "शलिबलिपतिवृतिनभिपटि०" [उ. ३४ ] इति आकः । प्रकीर्तिता—कथिता । धूका, ध्वाजिः च ॥६४॥

**ध्वजः पताकादण्डोऽपि ।**

ध्वजति धूयते ध्वजः । पताकायाः दण्डः पताकादण्डः तन्नाम ।

**झम्पानं याप्ययानवत् ।**

"चमूछमूजमूझमूजिमू अदने" झमति अत्ति इव झम्पानम् । "मुमुचान-युयुधान०" [ उ. २७८ ] इति आने निपात्यते । याप्यस्य अशक्तस्य यानम्—युग्याख्यम् याप्ययानम् । यथा 'याप्ययान'शब्दः शिबिकावाची तथाऽयमपीति **गौडः** ।

**सादी सव्येष्ठोऽपि सूते ।**

"षद्लृ विशरणगत्यवसादनेषु" सीदतीति सादी । ग्रहादित्वाद् णिन् । सादिः अपि । सव्ये तिष्ठतीति सव्येष्ठः । "स्थापास्नात्रः कः" [ ५।१।१४२ ] इति कः । भीरुष्ठानादित्वात् षत्वम्, सप्तम्यलुप् च । सुनोति सूतः । "सुसितनि०" [ उ. २०३ ] इति तो दीर्घत्वं च । सुवतीति वा । तत्र ।

**कवचितोऽपि वर्मिते ॥ ६५ ॥**

कवचम् जातम् अस्य कवचितः । वर्म जातम् अस्य वर्मितः । उभयत्र तारकादित्वाद् इतः, तत्र ॥६५॥

**कवचे दंशनं त्वक्त्रं तनुत्राणमपि स्मृतम् ।**

"कुङ् शब्दे" कवते कवचम् । पुंक्लीबलिङ्गः । "कल्यविमदिमणिकुकणिकटिकृम्योऽचः" [ उ. ११४ ] इति अचः । दश्यते—बध्यते देहे दंशनम् । "अनट्" [ ५।३।१२४ ] इति अनट् । त्वचम् त्रायते त्वक्त्रम् । "क्वचित्" [ ५।१।१७१ ] इति डः । तनोः—शरीरस्य त्राणम्—रक्षणम् तनुत्राणम् । स्मृतम्—उक्तम् । अरित्रम् इत्यपि ।

**अधियाङ्गं धियाङ्गं चाधिकाङ्गवदुदाहृतम् ॥ ६६ ॥**

अधिकम् अङ्गात् अधियाङ्गम् । निरुक्तिवशात् कस्य यकारादेशः । यदाह **मुनिः**– "अधियाङ्गं सारसनम्" । [ ] इति । "धित् धरणे" धियति देहम् धियाङ्गम् । "पतितमितृपकृशल्वादेरङ्गः" [ उ. ९८ ] इति अङ्गः, बाहुलकाद् दीर्घत्वम् च । यदाह **हुग्रः** (? दुर्गः)

"तस्य सारसनं ज्ञेयं धियाङ्गं च निबन्धनम्" । [ ]इति । अधिकम् अङ्गात् अधिकाङ्गम् । यत् सकञ्चुकैर्हृदि धार्यते तन्नामानि । वदर्थः पूर्ववद् अवसेयः ॥६६॥

**शिरस्कं खोलमप्याहुः**

शिरसो मस्तकस्य प्रतिकृतिः शिरस्कम् । "खोल खोटने" खोल्यते बाणादि प्रतिहन्यतेऽनेन खोलम् । अल् ।

**स्यान्निषङ्ग्यपि तूणिनि ।**

निषङ्गोऽस्त्यस्य निषङ्गी । तूणम् अस्त्यस्य तूणी, धनुर्धरः तत्र ।

**चापे धनूधनुशरासनान्यपि विदुर्बुधाः ॥ ६७ ॥**

चपस्य-वेणोर्विकारः चापः, तत्र । "विकारे" [ ६।२।३० ] इति अण् । धन्यते–अर्थ्यते धनति शब्दायते ज्याघातेन वा धनूः । "कृषिचमितनिधनि०" [उ. ८२९] इति ऊः प्रत्ययः । स्त्रीलिङ्गः । "भृमृतॄत्सरितनिधनि" [उ. ७२६ ] इति 'उः' प्रत्यये धनुः उकारान्तः । पुंक्लीबलिङ्गः । शरस्यासनम् शरासनम् । विदुर्जानन्ति बुधाः-पण्डिताः । कालकम् , कालपृष्ठम् , अवसम् , कमरम् च ॥ ६७ ॥

**फरकस्फरकौ खेटे**

फलति विशीर्यते फलम् । स्वार्थिके के फलकम् । रलयोरैक्ये फरकम् । पुंक्लीबः । स्फरति चलति स्फरकः । कुटादिः अयमित्येके । तत्पाठबलाच्च णके वृद्धयभावः । खेटयति उत्त्रासयति खेटम् । पुंक्लीबः । तत्र[1] विविक्त–वसुनन्दकौ अपि ।

**क्षुरिका छुरिका छुरी ।**

क्षुरति-विखनति क्षुरिका । णके आप्....छुरति–छिनत्ति छुरिका । "अच्" [ ५।१।४९ ] इति अचि, छुरी ।

**ईल्यां तरवालिकाऽपि**

१. प्रा. प्रतौ 'तत्र' नास्ति ।

ईल्यते—स्तूयते ईली, एकधारोऽसिः, तुरुष्कायुधम् । तत्र[1] । तरस्य—बलस्य वालः तरवालः । अल्पः तरवालस्तरवालिका । न्युब्जः, खड्गः । कडतलम् इति व्याडिः । स च देश्याम् अपि ।

**परिघः पलिघः समौ ॥६८॥**

परिहन्यते अनेन[2] परिघः, लोहबद्धो लगुडः । "परेर्घः" [५।३।४०] इति अलि 'घ'आदेशः । "परेर्घाङ्कयोगे" [ २।३।१०३ ] इत्यनेन रेफस्य लत्वे पलिघः ॥६८॥

**ऊर्जस्व्यूर्जस्वान्**

ऊर्ग् बलमस्त्यस्य ऊर्जस्वी । "ऊर्जो विन्वलावश्चान्तः" [ ७।२।५१ ] इति विन् प्रत्ययः, अस् च अन्तः । ऊर्जो बलम् अस्त्यस्य ऊर्जस्वान् । "तदस्यास्त्यस्मिन् इति मतुः" [७।२।१] इत्यनेन ऊर्जयतेरस्प्रत्ययान्तस्य मतुः प्रत्ययः । मतौ ऊर्वान् अपि । ऊर्जातिशयान्वितः ।

**मगधो मङ्खो बोधकरोऽर्थिकः ।**

मगधः कण्ड्वादौ । मगध्यति याचते मगधः । अच् । वंशोदीरणेन यो याचते । यदाहुः—"मागधाः स्तुतिवंशजाः" इति । "मनिंच् ज्ञाने" मन्यते मङ्खः । "शमिमनिभ्यां खः" [उ. ८४ ] इति खः । बोधम्-प्रबोधम् करोति मङ्गलपाठैरिति बोधकरः । अर्थ्येव अर्थिकः । स्वार्थिकः कः । अर्थो विद्यतेऽस्य वा । "अतोऽनेकस्वरात्" [ ७।२।६ ] इति इकः ।

**सौखशायनिकः सौखशय्यिकः सौखसुप्तिकः ॥६९॥**

सुखम् च तत् शयनं च सुखशयनम्, सुखशयनम् पृच्छति सौखशायनिकः । "सुस्नातादिभ्यः पृच्छति" [ ६।४।४२ ] इति इकण् । अनुशतिकादिपाठात् उभयपदवृद्धिः । सुखशय्याम् पृच्छति सौखशय्यिकः । सुखम् सुप्तम् पृच्छति सौखसुप्तिकः । उभयत्र "सुस्नातादिभ्यः पृच्छति" [ ६।४।४२ ] इति इकण् । वैतालिकनामानि ॥६९॥

**रणे संस्फेटसम्फेटौ**

रणन्ति शब्दायन्ते दुन्दुभयोऽत्र रणम् । पुंक्लीवः । "पुन्नाम्नि०" [ ५।३।१३० ] इति बाहुलकाद् घः । तत्र । "पट स्फिटण् हिंसायाम्" संस्फेटयति[3] कातरहृदयानि संस्फेटः[4] । "पुन्नाम्नि०" [ ५।३।१३० ] इति घः । स्फेटोऽपि ।

---

१. जे. प्रतौ 'तत्र' नास्ति । २. प्रा. प्रतौ 'अनेन' नास्ति । ३. जे. संस्फोटयति । ४. जे. संस्फोटः ।

सम्फेट इति भरतः । पृषोदरादित्वात् साधुः । णके स्फेटकोऽपि । सहुरिः दन्त्यादिरयम्, हान्त्रम्, असुरिः, घासिः, गुबेरम्, युध्मः, तल्पम् च ।

**बले द्रविणमूर्क् तथा ।**

बलति अनेन बलम् । पुंक्लीबः । "वर्षादयः क्लीवे" [५।३।२९] इति-अल्[1] । तत्र । "द्रु गतौ" द्रवति द्रविणम् । "द्रुहवृहिदक्षिभ्यः इणः" [उ.१९४] इति इणः । "ऊर्जण् बलप्राणनयोः" ऊर्जयतीति ऊर्क् । "दिद्युद्द०" [५।२।८३] इति क्विप् । "रात् सः" [२।१।९०] इति नियमादत्र संयोगान्तलोपो नास्ति । परीरम्, ऋजीकम्, माहिनम्, ताविषम्, तविषम्, द्रप्रः च ।

**अवस्कन्दोऽपि धाट्यां स्यात्,**

"स्कन्दृं गतिशोषणयोः" अवस्कन्दनम् अवस्कन्दः । अल् । अवस्कन्दन्ति अत्र वा । अच् । धावन्तोऽटन्ति अस्यां धाटिः । पृषोदरादित्वात् साधुः । ङ्याम् धाटी, तस्याम् ।

**नशनं च पलायने ॥७०॥**

नश्यते नशनम् । "अनट्" [५।३।१२४] इत्यनट् । पलाय्यते पलायनम्, तत्र । "उपसर्गस्याऽयौ" [२।३।१००] इत्यनेन उपसर्गसम्बन्धिनो रेफस्य लत्वम् ॥७०॥

**चारकोऽपि भवेद् गुप्तौ,**

चरन्ति अनेन चारः । स्वार्थिके के, चारकः । गुप्यते रक्ष्यतेऽस्यां पुमान् गुप्तिः । "स्त्रियां क्तिः" [५।३।९१] इति क्तिः । तस्याम् ।

**तापसे तु तपस्व्यपि ।**

तपः शीलम् अस्य तापसः । "अङ्स्थाच्छत्राऽऽदेः०" [६।४।६०] इति अञ् । तपोऽस्यास्तीति वा । ज्योत्स्नादित्वाद् अण् । तपो विद्यतेऽस्य तपस्वी । "असूतपोमायामेधास्रजो विन्" [७।२।४८] इति विन् ।

**विप्रे ब्रह्माऽपि च**

विविधं प्राति-पूरयति विप्रः । "क्वचित् [५।१।१७१]" इति डः । विशेषेण पातीति वा । "खुरक्षुर०" [उ.३९६] इति रे निपात्यते । तत्र । बृंहते ब्रह्मा । अभेदोपचारात् "बृंहेर्नोऽच्च" [उ.९१३] इति मन्, नकारस्य चाऽकारः ।

**आग्नीध्राऽऽग्नीध्र्यपि**

"ञिइन्धैपि दीप्तौ" अग्निम् इन्द्धे अग्नीध् क्विप्, "नो व्यञ्जनस्य०" [४।२।४५] इति नेलुक् । अग्नीधः । ऋत्विग्विशेषस्य इयं आग्नीध्रा । गृहेऽग्नीधो रण् धश्च"

---

१. जे. इत्यण् । २. जे. 'न' नास्ति ।

[६।३।१७४] इति रण् प्रत्ययः। अन्तस्य तृतीयबाधनार्थं धादेशश्च। आग्नीध्रा एव आग्नीध्री : प्रज्ञादित्वात् स्वार्थे अण् इति अण्। "अणञेय०" [२।४।२०] इति ङीः। अग्नीन्धननाम्नी।

वृषी वृसी ॥७१॥

ब्रुवन्तः सीदन्ति अस्यां वृषी, तपस्विनामासनविशेषः। पृषोदरादित्वात् साधुः। गौरादित्वाद् ङीः। ब्रुवन्तः सीदन्ति अस्यां वृसी। पृषोदरादित्वात् गौरादित्वाद् ङीः, बाहुलकाद् षत्वाभावः। तालव्योपान्त्योप्ययम् इति एके ॥७१॥

शसनं शमनं च

"शस् हिंसायाम्" शस्यते शसनम्। "अनट्" [५।३।१२४] इति अनट्। शम्यते शमनम्। अनट्। यज्ञविषयिहिंसानाम।

अथ दधिषाय्यं पृषातके।

दधिभिः स्यति दधिषाय्यम्। दीव्यतेः दीधीषू इत्यादेशे दीधीषाय्यम् अपि। उभावपि "दधिषाय्य-दीधीषाय्यौ" [उ. ३७४] इति आय्य प्रत्ययान्तौ निपात्येते। पृषद्भिः दधिबिन्दुभिः अङ्क्यते पृषातकः। दधिसंयुक्तमाज्यम्, तत्र। पृषोदरादित्वात् साधुः।

अग्निहोत्रिण्यग्न्याहितोऽपि

अग्निहोत्रम् अस्यास्ति अग्निहोत्री, तत्र। अग्नौ आहितः अग्न्याहितः।

उपवासे समाविमौ ॥७२॥

उपवस्त्रमौपवस्तम्

उपवसनम् उपवासः, तत्र। उपवसति अत्र उपवस्त्रम्। "हुयामा०" [उ.४५१] इति त्रः। क्लीबे माला। पुंस्यपि अरुणः। "वसूच् स्तम्भे" उपवस्यते अनेन उपवस्तः, 'क्त' प्रत्ययः। तस्येदम् औपवस्तम्। "तस्येदम्" [६।३।१६०] इति अण्। उपवसथोऽपि। इमौ उपवस्त्रौपवस्तशब्दौ समौ-तुल्यौ।

उपवीते प्रचक्षते।

ब्रह्मसूत्रं पवित्रं च,

उपवीयते-प्राव्रियते स्म उपवीतम्, पुंक्लीबलिङ्गः, तत्र। ब्रह्मणः सूत्रं ब्रह्मसूत्रम्। पूयते पुनाति वा पवित्रम् "वन्धिवहि०" [उ. ४५९] इत्यादिना इत्रः प्रत्ययः।

वाल्मीकौ द्वाविमावपि ॥७३॥

**मैत्रावरुण्यादिकवी**

वल्मीकस्य अपत्यं वाल्मीकिः। बाह्वादित्वाद् इञ्। तत्र। मित्रावरुणयोरपत्यं मैत्रावरुणिः। ऋषिसमुदायस्यानृषित्वाद् इञ्। आदौ कविः आदिकविः। इमौ द्वौ-मैत्रावरुण्यादिकविशब्दौ।

**पर्शुरामोऽपि भार्गवे।**

पर्शुना—कुठारेण रमते पर्शुरामः। "वा ज्वलादि०" [५।१।६२] इति णः। परशुरामोऽपि। भृगोरपत्यं भार्गवः। "ऋषिवृष्णि०" [६।१।६१] इति अण्। तत्र।

**योगीशो याज्ञवल्क्यः**

योगिनामीशः योगीशः। यज्ञवल्कस्य अपत्यं याज्ञवल्क्यः। गर्गादित्वाद् यञ्।

**दाक्षीपुत्रोऽपि पाणिनौ ॥७४॥**

दाक्ष्याः पुत्रो दाक्षीपुत्रः। पाणिनस्यापत्यं पाणिनिः। "अत इञ्" [६।१।३१] इति इञ्। तत्र ॥७४॥

**स्फोटायनः स्फौटायनः**

स्फोटम्—शब्दस्फोटम् अयते स्फोटायनः स्फोटवादित्वात्। स्फुटस्य अपत्यं स्फौटायनः। "अश्वादेः" [६।१।४९] इति आयनञ्।

**कात्यो वररुचौ तथा।**

कतस्यापत्यं कात्यः। कात्यः पिताऽस्त्यस्य कात्यः। अभ्रादित्वाद् अः। अभेदोपचारात्। वरा रुचिः अस्य वररुचिः, तत्र।

**कारेणवः पालकाप्ये**

करेणोः—करिण्या अपत्यं कारेणवः। "ङसोऽपत्ये" [६।१।२८] इति अण्। पालकैः—हस्तिचिकित्सकैः आप्यते—आप्तत्वेन प्राप्यते पालकाप्यः, तत्र। "ऋवर्ण-व्यञ्जनाद् घ्यण्" [५।१।१७] इति घ्यण्।

**चाणक्यश्चणकात्मजे ॥७५॥**

चणकस्य ऋषेरपत्यं चाणक्यः। "गर्गादेर्यञ्" [६।१।४२] इति यञ्। चणकस्य ऋषेः आत्मजः चणकात्मजः, तत्र ॥७५॥

**वैशेषिके कणादोऽपि**

नित्यद्रव्यवृत्तयोऽन्त्या विशेषास्ते प्रयोजनमस्य वैशेषिकम् शास्त्रम् तद्वेत्त्यधीते वा वैशेषिकः, तत्र । कणान् अत्ति कणादः "कर्मणोऽण्" [५।१।७२] इति अण् । कणान् आदत्ते वा । 'क्वचित्' [५।१।१७१] इति डः ।

जैनोऽनेकान्तवाद्यपि ।

जिनो देवताऽस्य जैनः । अनेकान्तम्-स्याद्वादम् वदतीति अनेकान्तवादी । ग्रहादित्वाद् णिन् ।

**चार्वाके लौकायितिकः**

"चर्व गतौ" चर्वति आत्मानं चार्वाकः । "मवाकश्यामाक०" [उ. ३७] इति आके निपात्यते । लोकेषु आयतं लोकायतम्, बृहस्पतिप्रणीतं शास्त्रम् तद्वेत्त्यधीते वा लौकायितिकः । "याज्ञिकौत्थिकलौकायितिकम्" [६।२।१२२] इति इकण् प्रत्यये निपात्यते, निपातनाच्च यकाराकारस्य इकारः ।

**कृषिः प्रसृतमित्यपि ॥७६॥**

कर्षणम् कृषिः । "नाम्युपान्त्यकृगॄ०" [उ. ६०९] इति किद् इः । "सृ गतौ" प्रसियते प्रसृतम् । कर्षणनाम्नी ॥७६॥

**न्यासार्पणे परिदानम्**

न्यासस्य–निक्षेपस्य अर्पणम्–निक्षेप्त्रे प्रतीपम् दानम् न्यासार्पणम्, तत्र । परिवर्त्ताद् दानम् परिदानम्, प्रतीदानम् अपि । स्मार्ते त्वस्य भेदोऽस्ति ।

"वासनस्थमनाख्याय हस्ते न्यस्य यदर्पितं ।
द्रव्यं तदुपनिधिर्न्यासः प्रकाश्य स्थापितुं तु यत् ॥
निक्षेपः शिल्पहस्ते तु भाण्डं संस्कर्तुमर्पितम् ।" इति ।

तत्रैवं व्याख्या—न्यासः–प्रकाश्य यत् स्थापितं तद् द्रव्यम्, तस्य अर्पणम् न्यासार्पणम्, तत्र ।

वणिक् प्रापणिकः स्मृतः ।

पणायति व्यवहरते वणिक् । "भृपणिभ्यामिज् मुखणौ च" [उ. ८७५] इति 'इज्' प्रत्ययः, पणेश्च वण् इत्यादेशः । प्रापणायति प्रापणिकः । "प्राङः पणिपनिकषिभ्यः" [उ. ४२] इत्यनेन 'प्राङः' इत्यस्माद् उपसर्गसमुदायात् परस्य "पणि व्यवहारस्तुत्योः"—इत्यस्य इकः प्रत्ययः । प्रपूर्वात् पणेरपि इच्छन्ति अन्ये । तन्मते प्रपणिकोऽपि । आपणिका, पनिका, पदिका, पतिका, अपि । एते सर्वेऽपि "आङः पणिपनिपदिपतिभ्यः" [उ. ३९] इत्यनेन इक प्रत्यये साधवः ।

**लक्षे च नियुतम्**

दशाऽयुतानि लक्षम् "विंशत्यादयः" [६।४।१७३] इत्यनेन लक्षम् इति निपात्यते। लक्ष्यते अनेन वा लक्षम्। स्त्रीक्लीबलिङ्गः। षष्ठम् अङ्कस्थानम्, तत्र। यदाह—

एकं दश शतमस्मात्सहस्रमयुतं ततः परं लक्षम्।
प्रयुतं कोटिमथार्बुदमब्जं खर्वं निखर्वं च॥
तस्मान्महासरोजं शङ्कुं सरितांपतिः ततस्त्वन्त्यम्।
मध्यं परार्धमाहुर्यथोत्तरं दशगुणं तज्ज्ञाः॥

इति। दश अयुतानि मानम् एषामस्य वा नियुतम्। "विंशत्यादयः" [६।४।१७३] इत्यनेन नियुतम् निपात्यते। प्रयुतम् अपि।

**पोते स्मृतं प्रवहणं बुधैः ॥७७॥**

पूयते अनेन पोतः "दम्यमि०" [उ. २००] इति तः। तत्र स्मृतम् उक्तम्। प्रोह्यतेऽनेन प्रवहणम्। "करणाधारे" [५।३।१२९] इति अनट्॥७७॥

**कर्णोऽप्यरित्रे दुर्गस्य**

कीर्यते अनेन नौः कर्णः। "इणुर्विशा०" [उ. १८२] इति णः। ईयर्त्ति अनेन नौः अरित्रम्, तत्र। "ऋधूसूखनि०" [५।२।८७] इति इत्रः। दुर्गस्य इति **दुर्गसिंहमते** आह च—"कर्णः श्रोत्रमरित्रं च"। [ ] इति।

**गवेश्वरोऽपि गोमति।**

गवामीश्वरो गवेश्वरः। "स्वरे वाऽनक्षे" [१।२।२९] इत्यनेन गोशब्दस्य ओकारस्य पदान्ते वर्तमानस्य स्वरे परे सति अव इत्यादेशो वा भवति। पक्षे गवीश्वरः। गावः सन्ति अस्य गोमान्। "तदस्यास्त्यस्मिन्निति मतुः" [७।२।१] इति मतुः। तत्र।

**कर्षके क्षेत्रजीवोऽपि**

कर्षति भुवम् कर्षकः णकः, तत्र। क्षेत्रेण जीवति क्षेत्रजीवः, क्षेत्राजीवोऽपि।

**कोटीशो लोष्टभेदनः ॥७८॥**

कोटीभिः—कोणैः श्यति—खण्डयति कोटीशः। "क्वचित्" [५।१।१७१] इति डः। अन्ततालव्यः। लोष्टान् भिनत्ति लोष्टभेदनः। "नन्द्यादिभ्योऽनः" [५।१।५२] इति अनः॥७८॥

---

१. जे. प्रतौ—'दम्यमीति तः' इति पाठो नास्ति।

**मार्द्वीकमपि मद्ये**

मृद्वीकाया विकारो मार्द्वीकम् । "विकारे" [६।२।३०] इति अण् । मदस्य करणं मद्यम् । "मतमदस्य करणे" [६।१।१४] इति यः । तत्र । मदयित्नुः इरासवः च ।

**अनुतर्षोऽपि चषके स्मृतः ।**

अनु तृष्यति अनेन अनुतर्षः । घञ् । चषन्ति पिबन्ति अनेन चषकः । "दृकृ-नृमसृ०" [उ. २७] इति अकः । तत्र । अमरस्तु—अनुतर्षशब्दं सुरापरिवेषणपर्यायमाह ।

**कुविन्दे तन्तुवायोऽपि**

कुं विन्दति कुविन्दः । "निगवादेर्नाम्नि" [५।१।६१] इति शः । कुत्सिता विन्दवः—जलकणा अस्येति वा कुविन्दः, पृषोदरादित्वाद् वकारस्य वकारः । तत्र । तन्तुम्—तन्त्रातानम् वयति तन्तुवायः । "कर्मणोऽण्" [५।१।७२] इति अण् ।

**वेमा वेमोऽपि कीर्त्यते ॥७९॥**

"वेग् तन्तुसन्ताने" वयन्ति अनेन वेमा, वानदण्डः[1] । पुंक्लीबलिङ्गः । "सात्मन्नात्मन्वेमन्०" [उ. ९१६] इति मन् प्रत्यये निपात्यते । "रुक्मग्रीष्म०" [उ. ३४६] इति मे निपातनात् वेमः । कीर्त्यते—निगद्यते बुधैरिति गम्यम् ॥७९॥

**रजको धावकोऽप्युक्तः**

"रञ्जी रागे" रजति रजकः । "नृत्खनरञ्जः०" [५।१।६५] इति अकट् । "अकट्घिनोश्च०" [४।२।५०] इति नलोपः । "धावूग् गतिशुद्ध्योः" धावति वस्त्राणि धावकः । "नाम्नि पुंसि च" [५।३।१२१] इति णकः ।

**पादत्राणं च पादुका ।**

पादौ त्रायते अनेन पादत्राणम् । "करणाऽऽधारे" [५।३।१२९] इति अनट् । पादूरेव पादुका "ङ्यादीदूतः के" [२।४।१०४] इति ह्रस्वः ।

**तैलिकस्तिलन्तुदोऽपि**

तैलम् अस्त्यस्य तैली । स्वार्थिके के, तैलिकः । तैलम् विद्यतेऽस्य वा तैलिकः । "अतोऽनेकस्वरात्" [७।२।६] इति इकः । तिलम् तुदति तिलन्तुदः । "बहुविध्व-रुस्तिलात् तुदः" [५।१।१२४] इति खश् प्रत्ययः ।

**रथकारोऽपि वर्धकिः ॥८०॥**

---

१. प्रा. 'वानदण्डः' नास्ति ।

रथम् करोति रथकारः । "कर्मणोऽण्" [५।१।७२] इति अण् । वर्धयति–छिनत्ति काष्ठानीति वर्धकिः । "वर्धेरकिः" [उ.६२४] इति अकिः ॥८०॥

**चित्रकरो लिखकश्च**

चित्रम् करोति चित्रकरः । "संख्याऽहर्दिवा०" [५।१।१०२] इति टः प्रत्ययः । लिखति चित्राणि लिखकः । "घ्रुघून्दिरुचितिलिपुलि०" [उ.२९] इति किद् अकः ।

**लेप्यकृल्लेपकोऽपि च ।**

लेप्यम् करोति लेप्यकृत् । "लिपींत् उपदेहे" लिम्पति लेपकः । "नाम्नि पुंसि च" [५।३।१२१] इति णकः ।

**कुतूहले विनोदोऽपि**

कुत्सितम् तोहति कुतूहलः । "मुरलोरल०" [उ.४७४] इति अले निपात्यते । विनोदनम् विनोदः । घञन्तः ।

**सौनिकः खट्टिकोऽपि च ॥८१॥**

सूना प्रयोजनमस्य सौनिकः । "प्रयोजनम्" [६।४।११७] इति इकण् । "खट्टण् संवरणे" खट्टयति खट्टिकः । "कुशिकहृदिकमक्षिका०" [उ. ४५] इति इके साधुः । खट्टोऽस्त्यस्य वा । "अतोऽनेकस्वरात्" [७।२।६] इति इकः ॥८१॥

**कूटयन्त्रे पाशयन्त्रम्**

कूटेन– छलेन यन्त्र्यतेऽनेन कूटयन्त्रम्, तत्र । पाशेन–बन्धनग्रन्थिना यन्त्र्यते अनेन पाशयन्त्रम् ।

**समौ चाण्डालपुक्कसौ ।**

चण्डते चण्डालः । "ऋकृमृ०" [उ.४७५] इति आलः । चण्डमालम् मृषा अस्येति वा । यद् व्याडिः—

"चण्डमालं मृषा यस्येत्यर्थः शब्दवतां मतः" । [ ] इति ।

चण्डाल एव चाण्डालः । प्रज्ञाद्यण् । पुत्–कुत्सितम् कसति–याति पुक्कसः । पृषोदरादित्वात् दन्त्यान्तः । "चक चुक्कण् व्यथने" चुक्कयति चुक्कस इत्येके, "फनस०" [उ.५७३] इति असे निपात्यते । द्वितीयवर्गाद्यक्षरादिरयम् । श्वपचो डोम्बः, पुक्कसो मृतप इति अवान्तरभेदोऽत्र नाऽऽश्रितः ।

**इत्थं तृतीयकाण्डस्य शिलोञ्छोऽयं समर्थितः ॥८२॥**

इत्थम्—अमुना प्रकारेण त्रयाणाम् संख्यापूरणस्तृतीयः स चासौ काण्डश्च तृतीयकाण्डस्तस्य तृतीयकाण्डस्य श्रीहैमनाममालामर्त्यकाण्डस्य[1] अयम् उक्तत्वेन प्रत्यक्षः शिलोञ्छः समर्थितः—रचित इत्यर्थः ॥८२॥

इति श्रीमद्बृहत्खरतरगच्छीयश्रीजयसागरमहोपाध्यायसन्तानीय-
वाचनाचार्यश्रीभानुमेरुगणिशिष्यमुख्योपाध्यायमिश्रश्रीज्ञानवि-
मलै[2]विनेयवाचनाचार्यश्रीश्रीवल्लभगणिविरचितायाम्
श्रीहैमनाममालाशिलोञ्छदीपिकायां तृतीय-
मर्त्यकाण्डस्य शिलोञ्छः समाप्तः ।

---

१. जे. प्रतौ 'श्रीहैमनाममालामर्त्यकाण्डस्य' इति पाठो नोपलभ्यते
२. प्रा. ज. प्रतौ—॰शिष्यमुख्यश्रीज्ञानविमलोपाध्याय॰ इति पाठः ।

# चतुर्थः तिर्यक्काण्डः

अथ तिर्यक्काण्डस्य शिलोञ्छो विव्रियते—तत्र पृथिव्यप्तेजोवायुवनस्पतिभेदेनै-केन्द्रियाः स्थावराः, द्वित्रिचतुःपञ्चेन्द्रियभेदेन त्रसाश्च कृमिप्रभृतयस्तिर्यञ्चो वक्ष्यन्ते। तत्र प्रथमं पृथिवीकायिकानाह[1]—

**रत्नवती भुवि**

रत्नानि विद्यन्तेऽस्यां रत्नवती। "तदस्यास्त्यस्मिन्निति मतुः" [७।२।१] इति मतुः। भवत्यस्याः सर्वम् इति भूः। "भ्यादिभ्यो वा" [५।३।११५] इति क्विप्। तस्याम्। इडा, अम्बा, उर्वरा अयं सर्वसस्यायाम्, भुवि अपि, दक्षा, स्थाया, कुडुमा, गूहतुः, सहुरिः, कर्वरी, अव्यथिषी च इत्यादयोऽपि।

**दिवःपृथिव्यावपि रोदसी।**

द्यौश्च पृथिवी च दिवःपृथिव्यौ। "दिवस्—दिवः पृथिव्यां वा" [३।२।४५] इति दिवः इत्यादेशः। रुदन्त्यनयोः रोदसी। "अस्" [उ.९५२] इति अस्। गौरा-दित्वाद् ङीः। क्लीबलिङ्गो द्विवचनान्तः। इदन्ताद् रोदसिशब्दाद् वा द्विवचने रोदसी। यदाह **उत्पलः**—"द्यावापृथिव्योर्द्विवचने रोदसिशब्दे इवर्णान्तादेशः पृषोदरादित्वात्" [ ] इति। रोदसीत्यव्ययमपि। द्यावाक्ष्मे जनित्वम्, नेत्वम् च।

**माणिबन्धं माणिमन्तं सैन्धवे**

मणिबन्धे गिरौ भवं माणिबन्धम्। मणिमन्ते गिरौ भवं माणिमन्तम्। उभयत्र "भवे" [६।३।१२३] इति अण्। सिन्धुनद्युपलक्षिते देशे भवं सैन्धवम्। "भवे" [६।३।१२३] इति अण्। पुंक्लीबलिङ्गः। तत्र।

**वसुके वसु ॥८३॥**

वसति वसु। "भृमृतॄत्सरितनिधन्यनिमनि०" [उ.७१६] इति उः प्रत्ययः स्वार्थिके के च, वसुकम्। वस्तकनाम लवणम्। तत्र। यदाह **मालाकारः**—"रौमके वसुकं वसु।" [ ] इति ॥८३॥

**टङ्कणष्टङ्कणः**

"टकुण् बन्धने" टङ्कयति टङ्कनः। "णिवेत्त्यासश्रन्थघट्टवन्देरनः" [५।३।१११] इति अनः। टङ्क्यते अनेन वा। "करणाऽऽधारे" [५।३।१२९] इति अनट्। "पुन्ना-म्नि०" [५।३।१३०] इति घे, टङ्कोऽपि। टङ्कयति टङ्कणः। "चिक्कण—कुक्कण—कृकण०" [उ. १९०] इति अणे निपात्यते।

---

१. पृथिवीकायकानाह।

**उपावर्तनं चापि नीवृति**

उपावर्तन्तेऽस्मिन्निति उपावर्तनम् । "करणाऽऽधारे" [५।३।१२९] इति अनट् । नियतम् वर्तन्ते अस्यां नीवृत् । "गतिकारकस्य०" [३।२।८५] इति क्विपि दीर्घः । स्त्रीलिङ्गः । **अमरस्तु** पुंस्याह । तस्याम् । **अमरस्तु**—"नीवृज्जन-पदौ देशविषयौ तूपवर्तनम्" [२।१।८] इति भिन्नमाह । भङ्गाल-रमठ-वर्तनयश्च ।[1]

**जङ्गलः स्याज्जाङ्गलोऽपि**

जायन्ते स्थलानि अत्र जङ्गलः । "ऋजनेर्गोऽन्तश्च" [उ.४६७] इति अलः । गकारश्चान्तः । जङ्गल एव जाङ्गलः । प्रज्ञादित्वाद् अण् । निर्जलदेशनाम्नी ।

**मालवन्मालको मतः ॥८४॥**

मलन्ते धरन्ति भयम् अत्र मालम् । "मांक् माने, मीयते वा" "शामाश्याश-कि०" [उ.४६२] इति अलः । स्वार्थिके के, मालकः । पुंक्लीबलिङ्गः । ग्रामस्यान्त-रालेऽटवी । वदर्थः पूर्ववदवसेयः ॥८४॥

**पत्तने पट्टनमपि**

"पतॢ गतौ" पतन्ति विविधदेशपण्यान्यागत्य[2] अस्मिन्निति पत्तनम् नगरम् । "पत्तनम् रत्नभूमिः" इत्याहुः **अपरे**[3] । तत्र । "पट गतौ" पटन्ति अस्मिन्निति पट्टनम् । उभयत्र "वीपतिपटिभ्यस्तनः" [उ.२९२] इति तनः । पटन्ति अत्रेति पट्टुमोऽपि[4] । "कुन्दुम–लिन्दुम–कुङ्कुम–विद्रुम–पट्टुमादयः" [उ.३५२] इति 'कुम' प्रत्ययान्तो निपात्यते । मन्दिरम् अजिरम् च ।

**कुण्डिने कुण्डिनापुरम् ।**

**स्यात्कुण्डिनपुरमपि**

"कुडुङ् दाहे" कुण्ड्यते पापम् अत्र कुण्डिनम् । "श्याकठिखलिनल्यविकु-ण्डिभ्य इनः" [उ.२८२] इति इनः । तस्मिन् कुण्डिने । कुण्डिना च तत्पुरं च कुण्डि-नापुरम् । "विपिनाजिनादयः" [उ. २८४] इति इने निपातनात् । "कुण्डिन" इति **वामनः** प्राह । कुण्डिनम् च तत्पुरम् च कुण्डिनपुरम् । विदर्भनगरीनामानि ।

**विपणौ पण्यवीथिका ॥८५॥**

विपण्यन्तेऽस्यामिति विपणिः, वणिग्मार्गः, तत्र । यत् **शाश्वतः**—

---

१. ज. प्रतौ 'मङ्गलरपठवर्त्तनयश्च' इति पाठः । २. प्रा. प्रतौ 'विविधदेशपण्यान्यागत्य' इति पाठो नास्ति । ३. प्रा. प्रतौ 'पत्तनं रत्नभूमिरित्याहुरपरे' इति पाठो नास्ति । ४. जे. पट्टमः ।

"आपणः पण्यवीथी च द्वयं विपणिसंज्ञकम्" [ ] । स्त्रीलिङ्गः । "पदिपठि०" [उ. ६०७] इति इः । तस्याम् । पण्यस्य वीथिः पण्यवीथिः । स्वार्थिके के, पण्यवीथिका । वणिग्वीथी, हट्टवर्त्तनी च ॥८५॥

**सुरुङ्गायां सन्धिरपि**

सरति—गच्छति अनया सुरुङ्गा । "सर्तेः सुर्च" [उ. १०८] इति उङ्गः । तस्याम् । सन्धीयतेऽस्मिन् सन्धिः । "उपसर्गाद् दः किः" [५।३।८७] पुंलिङ्गः ।

**गृहे धाममपि स्मृतम् ।**

गृह्णाति पुरुषोपार्जितं द्रव्यम् इति गृहम् । "गेहे ग्रहः" [५।१।५५] इति कः । पुंक्लीबलिङ्गस्तत्र । दधाति आश्रयमस्मिन् इति धामम् । "अर्तीरिस्तुसुहु०" [उ. ३३८] इत्यादिना मः । क्लीबलिङ्गः । कुटीरः, अररः, अजिरम्, सात्रम्, पल्लिः अयं मुन्याश्रमव्याधयोरपि, वसिः, भविलः, विशिपम्, वैण्ट्रम् च । "हने रन् घ च" *[ ] इत्यनेन पाणिनीयसूत्रेण "हन् हिंसागत्योः" इत्यस्य 'घ' आदेशे रनि प्रत्यये घरोऽपि ।

**उपकार्योपकर्यापि**

उपक्रियते—उपष्टभ्यते उपकार्या । "ऋवर्णव्यञ्जन०" [५।१।१७] इति घ्यण् । "शिक्यास्याढ्यमध्य०" [उ. ३६४] इति ये निपातनात् उपकर्या । यद् वा, उपकरणम् उपकरः । अल् । तत्र साध्वी उपकर्या । "तत्र साधौ" [७।१।१५] इति यः । पटमण्डपादि राजसदनम् । उक्तं च—

'गृहस्थानं स्मृतं राज्ञामुपकार्योपकारिका' । [ ] इति ।

**प्रासादे च प्रसादनः ॥८६॥**

प्रसीदन्ति नयन-मनांसि अस्मिन्निति प्रासादः । "घञ्युपसर्गस्य०" [३।२।८६] इति दीर्घः । प्रसादयति प्रसादनः । देवभूपानां गृहम् ॥८६॥

**शान्तीगृहं शान्तिगृहे**

शान्त्यै गृहम् शान्तिगृहम् । तत्र । शान्तीगृहम् इत्यत्र बाहुलकाद् दीर्घः, "तिक्कृतौ नाम्नि" [५।१।७१] इति 'तिक्' प्रत्यये "इतोऽक्त्यर्थाद्" [२।४।३२] इति ङ्यां च शान्ती शान्तिस्तस्यै गृहम् इति वा । यदाह वाचस्पतिः—

"आथर्वणं शान्तिगृहं शान्तीगृहकमप्यदः" [ ] । इति ।

**प्राङ्गणं त्वङ्गणं मतम् ।**

*मुद्रितपाणिनीयसूत्रेष्विदं सूत्रं नैवावलोक्यते, अतः शोधनीयमिदं सूत्रम् ।

"अगु गतौ" प्राङ्गन्ति अत्र प्राङ्गणम् । "करणाऽऽधारे" [५।३।१२९] इति अनट् । अङ्गन्ति अत्र अङ्गणम् । "तॄकृशॄ०" [उ. १८७] इति अणः । मतम्—सम्मतम् ।

**कपाटवत् कवाटोऽपि**

कम्पते—चलति कपाटः । "कपाटविराट०" [उ. १४८] इति—आटे निपात्यते । कम्—शिरः पाटयति प्रविशतामिति वा कपाटः । "जपादीनां पो वः" [२।३।१०५] इति पस्य वत्वे कवाटः । त्रिलिङ्गः । वदर्थः पूर्ववदवसेयः ।

**पक्षद्वारे खटक्किका ॥८७॥**

पक्षस्य द्वारम् पक्षद्वारम्, पार्श्वद्वारम् । यदाह कात्यः—

"प्रच्छन्नमन्तरद्वारं पक्षद्वारं तदुच्यते" । [ ] इति । तत्र । "खट काङ्क्षे" खटयते—काङ्क्ष्यते खटका । "निष्कतुरुष्क०" [उ. २६] इति कान्तो निपात्यते। स्वार्थिके के, खटक्किका । "ङ्यादीदूतः के" [२।४।१०४] इति ह्रस्वः ॥८७॥

**कुशूलवत् कुसूलोऽपि**

"कुशच् श्लेषणे" कुश्यते धान्येन कुशूलः । तालव्यमध्यः । "कुसच् श्लेषे" कुस्यते धान्येन कुसूलः । दन्त्यमध्यः । उभावपि "कुलिपुलिकुसिभ्यः किद्" [उ. ४९०] इति किद् ऊले साधू । वदर्थः पूर्ववत् । धान्यकोष्ठनाम्नी । बलतः धान्यावरोधश्च ।

**समुद्गे तु पुटो मतः ।**

"उब्जत् आर्जवे" समुब्ज्यते समुद्गः । "भावाऽकर्त्रोः" । [५।३।१८] घञ्, उद्गादित्वाद् गत्वम् । न्यङ्क्वादित्वाद् वा निपात्यते। समुद्गच्छतीति वा । "क्वचित्" [५।१।१७१] इति डः । तत्र । पुटयते-श्लिष्यते पुटः । "नाम्युपान्त्य०" [५।१।५] इति कः । भूषणाद्यावपनम् ।

**पेटायां स्यात् पेटकोऽपि पेडाऽपि कृतिनां मते ॥८८॥**

"पिट् शब्दे च, चकारात् संहतौ" पेटति पेटा । लिहादित्वाद् अच् । पेटति पेटकः । "छिदिभिदिपिटेर्वा" [उ. ३०] इति अकः । पेट एव वा । पुंक्लीबलिङ्गः । स्त्रियां पेटिका इत्यन्यः । केचिदेनं पेडा इति सिद्ध्यर्थं डान्तं पठन्ति । अमरस्तु— "पीडण् गहने" इत्यस्य पेडा इत्याह । कृतिनाम्—विदुषाम् मते ॥८८॥

**पवन्यपि समूहन्याम्**

पूयते–शोध्यते गृहम् अनयेति पवनी । "करणाऽऽधारे" [५।३।१२९] इति अनट् । समुह्यते रजोऽनया समूहनी, बहुकरी । "करणाऽऽधारे" [५।३।१२९] इति अनट् तस्याम् ।

**अयोनिं मुसलं विदुः ।**

न विद्यते योनिः अस्य अयोनिः । अयो–लोहम् नयति–प्राप्नोति मुखे वा । पृषोदरादित्वात् साधुः । अयसा–लोहेन अनिति–प्राणितीति वा । "पदि-पठि०" [उ. ६०७] इत्यादिशब्दाद् इः । यदाह वैजयन्तीकारः—

"अयोनिर्मुसलोऽस्त्री स्यात्" [ ] । इति । मुस्यते–खण्ड्यतेऽनेन मुसलः । "तृपिवपिकुपिकुशि०" [उ. ४६८] इत्यादिना किद् अलः । मुहुः बारंवारं स्वनम् लाति, मुहुर्मुहुर्लसतीति वा मुसलः । पृषोदरादित्वात् साधुः । क्षोताऽपि । ऋकारान्तोऽयम् । मुषलोऽपि ।

**कण्डोलके पिटकोऽपि**

"कडुङ् मदे" कण्ड्यते कण्डोलः । वंशदलादिमयं भाण्डम् । तत्र । "कटिपटिकण्डिगण्डि०" [उ. ४९३] इति ओलः । "पिट शब्दे च" पेटति पिटम् । "नाम्युपान्त्य०" [५।१।५४] इति कः । पुंक्लीवलिङ्गः । स्वार्थिके के, पिटकः । पिटति वा पिटकः । "छिदिभिदिपिटेर्वा" [उ. ३०] इति किद् अकः ।

**चुल्ल्यामन्तीति कथ्यते ॥८९॥**

"चुल्ल हावकरणे" चुल्लतीव ज्वालाभिरिति चुल्लिः । "किलिपिलिपिशि-चिटि०" [उ. ६०८] इत्यादिना इः । तस्याम् "अतु बन्धने" अन्तति–बध्नाति वह्निम् अन्तिः । "पदिपठिपचि०" [उ. ६०७] इत्यादिशब्दाद् इः प्रत्ययः । "इतोऽक्त्यर्थाद्" [२।४।३२] इति ङ्याम्, अन्ती । यदाह मालाकारः—

"अन्त्यधिश्रयणी भवेत्" । [ ] इति ।

केचिदेनम् इन्नन्तमिच्छन्ति, तत्रैवम्, अन्तोऽस्यास्तीति अन्ती । पुंलिङ्गः । 'इतिः' अवधारणे, कथ्यते–उच्यते विद्वद्भिरिति गम्यम् । सूर्मी इत्यपि ॥८९॥

**खजः खजाकोऽपि मथि ।**

"खज मन्थे" खजति मथ्नाति खजः । "अच्" [५।१।४९] इति अच् प्रत्ययः । खजन्ति अनेनेति खजाकः । "शलिबलिपतिवृति०" [उ. ३४] इति आकः । मथ्यतेऽनेन मन्थाः । "पथिमन्थिभ्याम्" [उ. ९२६] इति इन् । तस्मिन् । मथि मन्थाने खजपोऽपि च ।

**विष्कम्भः कुटकोऽस्य तु ।**

अस्य मथः, विष्कभ्नाति-बध्नातीति विष्कम्भो दण्डको यस्मिन् बद्ध्वा मन्था आकृष्यते । "कुटत् कौटिल्ये" कुटति कुटः । "नाम्युपान्त्य०" [५।१।५४] इति कः । स्वार्थे के, कुटकः । णके प्रत्यये वा कुटादित्वाद् गुणाभावः । मन्दीरम् देश्याम् ।

**अगोऽपि पर्वते**

न गच्छति अगः, स्थावरत्वात् । "क्वचित्" [५।१।१८१] इति डः । अगति वा । "अच्" [५।१।४९] इति अच् । पर्व्यते—पूर्यते शिलाभिः पर्वतः । "दपृभृमृशीयजि०" [उ. २०७] इत्यादिना अतः । तत्र । अविः, जीमूतः, बलाहकः, दर्दरः, माहूरः, सहिरः आदिदन्त्योऽयम्, वर्द्धसानः मध्यदन्त्योऽयम्, वटम्बः, शयानकः तालव्यादिरयम्, सहान्यः दन्त्यादिरयम्, धृत्वा नन्तोऽयम्, सद्रिः सद्रुश्च उभावपि दन्त्यादी ।

**कौञ्जः क्रौञ्चवद् मन्यते बुधैः ॥९०॥**

कुञ्जस्य—पर्वतैकदेशस्याऽयं कौञ्जः । "तस्येदम्" [६।३।१६०] इति अण् । "क्रुञ्चू गतौ" क्रुञ्चति क्रुञ्चः । प्रज्ञाद्यणि, क्रौञ्चः । बुधैः-विद्वद्भिः मन्यते ॥९०॥

**कक्खटयपि खटिन्यां स्यात्**

"कक्ख हसने" कक्खतीव श्वेतत्वात् कक्खटी । "दिव्यवि०" [उ. १४२] इति अटः । खटः आकाङ्क्षकोऽस्त्यस्याः खटिनी, खटी, तस्याम् ।

**ताम्रमौदुम्बरं विदुः ।**

ताम्यति वह्निना ताम्रम् । "चिजिशुसि०" [उ.३९२] इति रः । उनत्ति क्लिद्यते वह्निना उदुम्बरम् । "तीवरधीवरपीवर०" [उ. ४४४] इत्यादिना वरट् प्रत्ययः । उन्देर्धातोश्च किद् उनन्तः । उद्गतं वरम् उदुम्बरम् इति **नैरुक्ताः** । तत उदुम्बरमेव औदुम्बरम् । प्रज्ञादित्वाद् अण् । नागमधुकेऽपि ।

**शातकौम्भमपि स्वर्णे**

शतकुम्भे गिरौ भवं शातकौम्भम् । अनुशतिकादित्वाद् उभयपदवृद्धिः । शोभनो वर्णोऽस्य स्वर्णम् । पृषोदरादित्वात् वलोपः । तत्र । चाम्पेयः, अवष्टम्भः, किरीटम्, कपीटम्, पीयुः, पुष्कलम्, रुचिष्यः, शादः तालव्यादिरयम्, सानसिः, रीतम्, पारक्, रुक्मलम्, नन्दयन्तः, मदयित्नुः इत्यादयोऽपि ।

पारदश्चपलोऽपि च ॥९१॥

पारम् ददाति पारदः । "चप सान्त्वने" चपति चपलः । "मृदिकन्दि-कुण्ड०" [उ. ४६५] इति अलः । अस्थैर्याद् वा ॥९१॥

रसजातं रसाग्र्यं च तुल्ये दार्वीरसोद्भवे ।

रसाद्–दारुहरिद्राया रसाद् जातम्–उत्पन्नं रसजातम् । रसेन–दारुहरिद्राक्वाथेन अग्र्यम् श्रेष्ठम् रसाग्र्यम् । रसाग्रे साधु वा । "तत्र साधौ" [७।१।१५] इति यः । तुल्ये–समाने । दार्वी–दारुहरिद्रा तस्या रसः–क्वाथः, तस्माद् उद्भवतीति दार्वीरसोद्भवस्तत्र । लोके "रसवति" इति प्रसिद्धिस्तन्नाम्नी ।

माक्षिके वैष्णवोऽपि स्यात्

माक्षिकम् मधु तद्वर्णं माक्षिकम्, अञ्जनविशेषः । तत्र । विष्णोरयं वैष्णवः । "तस्येदम्" [६।३।१६०] इति अण् । अत एव अजस्य विष्णोर्नाम अस्य अजनामकः ।

गोपित्तं हरितालवत् ॥९२॥

गोपित्तमिव गोपित्तम् । अत एव गोदन्तः । हरेः पीतवर्णस्य तालः प्रतिष्ठाऽस्य हरितालम् । हरिताम्–पीतत्वम् अलति भूषयति वा । वदर्थः पूर्ववदवसेयः । जैरम् अपि । यद् धन्वन्तरिः—

"हरितालं च गोदन्तं पीतकं नटमण्डनम् ।
आलं च तालं जैरं च पिञ्जरं विस्रगन्धिकम् ।" ॥९२॥

मनःशिलायां नैपाली शिला च सुधिया मता ।

मनोवाच्या शिला मनःशिला, तस्याम् । नेपालदेशे भवा नैपाली । "भवे" [६।३।१२३] इति अण् । "अणञेय०" [२।४।२०] इति ङीः । "शिलत् उञ्छे" तालव्यादिः । शिलति शिला । "नाम्युपान्त्य०" [५।१।५४] इति कः । सुधिया–पण्डितेन कथितेत्यर्थः ।

शृङ्गारमपि सिन्दूरे

शृणाति शृङ्गारम् । "द्वारशृङ्गार०" [उ. ४११] इति आरे निपात्यते । शृङ्गारहेतुत्वाद् वा शृङ्गारम् । स्यन्दते सिन्दूरम्, तत्र । "सिन्दूरकर्च्चूर०" [उ. ४२०] इति ऊरे निपात्यते । गान्धारपङ्कः, रक्तरेणुः च । यद् धन्वन्तरिः—

"सिन्दूरं रक्तरेणुश्च नागरक्तं च नागजम् ।
शृङ्गारभूषणं श्रीमद् वसन्तोत्सवमण्डनम् ॥"

**कुरुविन्दे तु हिङ्गुलुः ॥९३॥**

कुरुम् विन्दति कुरुविन्दः । "नि-गवादेर्नाम्नि" [५।१।६१] इति शः । "हिंद् गतिवृद्धयोः" हिनोति हिङ्गुलुः । "गूहलुगुग्गुलुकमण्डलवः" [उ. ८२४] इति वहुवचनाद् 'आलु' प्रत्यये निपात्यते ॥९३॥

**बोलो गोपो रसोऽप्युक्तः**

बोल्यते बोलः । "वुलण् निमज्जने" । गां पाति गोपः । रसति रस्यते वा रसः । भीमवद् इति वा । गोपः रसः । पिण्टोऽपि । उक्तः—कथितो विद्वद्भिरिति गम्यम् ।

**रत्नं माणिक्यमित्यपि ।**

रमते मनोऽत्र रत्नम् । "रमेस्त् च" [उ. २६४] इति 'न'प्रत्ययः, तश्चान्तादेशः । तच्च अष्टविधम् । यद् वाचस्पतिः—

"हीरकं मौक्तिकं स्वर्णं रजतं चन्दनानि च ।
शंखश्चर्म च वस्त्रं चेत्यष्टौ रत्नस्य जातयः" ॥

प्रशस्यो मणिर्मणिकः[1] । मणिक एव माणिक्यम् । भेषजादित्वाद् ट्यण् । क्लीबलिङ्गः । "इतोऽक्त्यर्थात्" [२।४।३२] इति ङ्याम्, 'मणी' इत्यपि । पारक्, पुलिकः, श्रावतानः च तालव्यादिरयम्, पुंलिङ्गा एते ।

**पद्मरागे शोणरत्नम्**

पद्मस्य इव रागोऽस्य पद्मरागः । पुंक्लीबलिङ्गस्तत्र । शोणम् च तत् रत्नम् च शोणरत्नम् । "शोणरत्नं लोहितकः पद्मरागः" [२।९।९२] इति अमरः ।

**वैराटो राजपट्टवत् ॥९४॥**

विराटदेशे भवो वैराटः । "भवे" [६।३।१२३] इति अण् । पट्टेन राजते राजपट्टः । राजदन्तादित्वात् पूर्वनिपातः । वदर्थः[2] पूर्ववज्ज्ञेयः ॥९४॥

**नीलमणौ महानीलम्**

नीलवर्णो मणिः नीलमणिः । महच्च तत् नीलम् च महानीलम् । क्लीबलिङ्गः । "इन्द्रनीलं महानीलम्" इति वैजयन्ती ।

---

१. प्रा. प्रतौ—'प्रशस्यो मणिर्मणिक' इति पाठो नास्ति । २. जे. प्रतौ 'वदर्थः' नास्ति ।

। समाप्तोऽयं पृथिवीकायः ।

अथ अप्कायमाह—

कबन्धमपि वारिणि ।

"कैं शब्दे" कायति कायते वा कम् । "क्वचित्" [५।१।१७१] इति डः । बध्नाति वायुं बध्यतेऽनेन वा बन्धम् । जलवाची कशब्दोऽभिधानचिन्तामणिसूत्रे उक्त एवाऽस्ति, इह तु पुनः कशब्दकथनं कबन्धभेददर्शनार्थमिति । वार्यते वारि । क्लीवलिङ्गः । तत्र । "स्वरेभ्य इः" [उ. ६०६] इति इः । शरम्, क्षौद्रम्, व्योम, कुशम्[1], वरुणः, बाहुलकात् पुंस्त्वमस्य । यदाह गौडः—

"पानीये यादसां पत्यौ वरुणो वरुणद्रुमे" ।

कटीरम्, तीवरम्, मीरम्, द्रमलम्, जलापम्, खजपम्, नेपम्, उलपम्, कृषीटम् मध्यमूर्धन्योऽयम् । कृपीटम्, चन्दिरम्, सदनिः, जीवथः, जीवातुः च ।

**धूमिका धूममहिषी धूमरी मिहिका समाः ॥९५॥**

धूमो विद्यतेऽस्यां धूमिका । "अतोऽनेकस्वरात्" [७।२।६] इति इकः । धूमप्रतिकृतिरिति वा धूमिका । "तस्य तुल्ये कः संज्ञाप्रतिकृत्योः" [७।१।१०८] इति कः । धूयतेऽनया वा । "कुशिक०" [उ. ४५] इति इके निपात्यते । महिषीव महिषी ताद्रूप्यात्, धूमोपलक्षिता महिषी धूममहिषी । धूमो विद्यतेऽस्यां धूमरी । "मध्वादिभ्यो रः" [७।२।२६] इति रः । मेहति मिहिका । "कुशिकहृदिक०" [उ. ४५] इति इके निपात्यते ॥९५॥

**अकूवारोऽपि जलधौ मकरालय इत्यपि ।**

जलम् धीयतेऽस्मिन् जलधिः समुद्रः । तत्र । न कुम्—पृथ्वीम् पिपर्त्ति अकूपारः । बाहुलकाद् दीर्घः । "जपादीनां पो वः" [२।३।१०५] इति वत्वे अकूवारः । मकराणाम्—मत्स्यानाम् आलयो मकरालयः । कुवलयः, मीवरः, मीरः, विकुम्रः, नभसः, पथित्वम्, प्यात्वम्, स्तिभिः, तृपत्, पुरुः, धूत्वा, प्रेनः दल्मिः च ।

**निम्नगायां ह्रादिनी स्यात्**

निम्नम् गच्छति निम्नगा, नदी, तस्याम् । ह्रादोऽस्त्यस्यां ह्रादिनी । वर्त्तरी, वेनिः, जित्वरी, नुविः, भुविः च, एतौ सकारान्तौ स्त्रीलिङ्गौ ।

---

१. जे. प्रतौ 'कुशम्' इति नास्ति ।

**जह्नुकन्याऽपि जाह्नवी ॥९६॥**

जह्नोः—सगरात्मजस्य कन्या जह्नुकन्या। जह्नुना पीता श्रोत्रेण मुक्ता इति लौकिकाः। जह्नोरियं जाह्नवी, गङ्गा, जह्नुनाऽवतारितत्वात्। "तस्येदम्" [६।३।१६०] इति अण्। "अणञेये०" [२।४।२०] इति ङीः ॥९६॥

**कलिन्दपुत्री कालिन्दी**

कलिन्दाद्रेः पुत्री कलिन्दपुत्री, कलिन्दतनयाऽपि। कलिन्दाद्रेरियं कालिन्दी। "तस्येदम्" [६।३।१६०] इति अण्। "अणञेये०" [२।४।२०] इति ङीः। यमुनानाम्नी। सूर्यतनया, शमनस्वसा च।

**रेवा मेकलकन्यका।**

रेवते वेगेन गच्छति रेवा। मेकलाद्रेः कन्यका मेकलकन्यका। सोमोद्भवाऽपि।

**चन्द्रभागा चन्द्रभागी**

चन्द्रेण भागतो न्यस्ता चन्द्रभागा, चन्द्रभागी नदी। शोणादिपाठबलाद् विकल्पेन ङीः। अणप्रत्ययान्ताद् नद्याम् इति एके। तत्रैवं व्याख्या—चन्द्र इव भागो यस्य स चन्द्रभागो गिरिः, ततः प्रभवति आगता वा चान्द्रभागा, चान्द्रभागी। "प्रभवति" [६।३।१५७] इति अण् "तत आगते" [६।३।१४९] इति अण् वा। अणन्तत्वात् नित्यं प्राप्ते विकल्पः। अनद्यास्तु नित्यं ङीः स्यादेव। यथा—चान्द्रभागी छाया। अन्ये तु अणन्तादेवार्थभेदेन विकल्पमिच्छन्ति। नद्याम् 'आप्' प्रत्ययोऽन्यत्र 'ङी' प्रत्ययः। चान्द्रभागा नदी[1], चान्द्रभागी[2], वनराजिरिति।

**गोमती गौतमीत्यपि ॥९७॥**

गावः जलानि सन्ति अस्यां गोमती। "तदस्यास्त्यस्मिन्निति मतुः [७।२।१] इति मतुः प्रत्ययः। गोतमस्य ऋषेरियं गौतमी। "तस्येदम् [६।३।१६०] इति अण्। "अणञेये०" [२।४।२०] इति ङीः ॥९७॥

**चक्राण्यपि पुटभेदाः**

क्रियते तृणादिसंघातनाश एभिरिति चक्राणि। "कृगो द्वे च" [उ. ७] इति अः प्रत्ययः धातोश्च द्वे रूपे भवतः। पुटम्—तृणादिसङ्घातम् भिन्दन्ति पुटभेदाः।

---

१. जे. प्रतौ 'चान्द्रभागा नदी' शब्दो नास्ति। २. जे. चान्द्राभागी।

पङ्के चिक्खल्ल इत्यपि ।

पञ्च्यते–विस्तार्यते जलेन पङ्कः । पुंक्लीबलिङ्गः । न्यङ्क्वादित्वात् कत्वम् । तत्र । खेलति मलम् अत्र चिक्खल्लः । "भिल्लाच्छभल्ल०" [उ. ४६४] इति ल्ले निपात्यते । "चिक् च करोति खल्लम् च भवति चिक्खल्लः" इति नैरुक्ताः । देश्याम् अप्ययम् । खञ्जनः, खलनः, प्रालेयः च ।

उद्घातनमुद्घाटनं घटीयन्त्रं प्रकीर्त्तितम् ॥९८॥

ऊर्ध्वम् हन्यतेऽनेन उद्घातनम् । "ञ्णिति घात्" [४।३।१००] इति घात् इत्यादेशः । ऊर्ध्वम् घात्यते वा अनेन उद्घातनम् । हन्तेः स्वार्थणिजन्तस्य अनटि रूपमिति कौटल्यः । उद्घाट्यते[1]–प्रकाश्यते जलमनेन उद्घाटनम् । "करणाऽऽधारे" [५।३।१२९] इति अनट् । घट्यादीनां यन्त्रम्, घट्यो यन्त्र्यन्ते ऽत्रेति वा घटीयन्त्रम्, मालाख्यम्, येन कूपादेर्जलमूर्ध्वम् वाह्यते ॥९८॥

सरस्तडाकस्तटाकोऽपि

सरति जलम् अत्र सरः । "अस्" [उ. ९५२] इति अस् । "तडण् आघाते" ताड्यते[2] जलमस्मिंस्तडाकः । "तट उच्छ्राये" तटति जलमत्र तटाकः । उभावपि "शलिबलिपतिवृतिनभिपटितटितडि०" [उ. ३४] इत्यादिना आके प्रत्यये साधू । खानिः, खनिः, खात्रम् च ।

अथ तल्लश्च पल्वले ।

तत् लाति–गृह्णाति तल्लः, तलति वा । "भिल्लाच्छभल्ल०" [उ. ४६४] इति ल्ले निपात्यते । देश्याम् अप्ययम् । "पल गतौ" पल्यते पल्वलः । पुंक्लीबलिङ्गः । "शमिकमिपलिभ्यो वलः" [उ. ४९९] इति वलः । तत्र पल्वले, अकृत्रिमोदकस्थानविशेषे ।

। समाप्तोऽयम् अप्कायः ।

अथ तेजःकायमाह—

आशयाश–शुष्म–बर्हिर्–बर्हिरुत्थ–दमूनसः ॥९९॥
अग्नौ

आशयम्–आधारम् अश्नाति–अत्ति आशयाशः । "अच्" [५।१।४९] इति अच् । शुष्यति अनेन शुष्मा । यथा–

1. उद्घाट्य । 2. जे. ताड्य ।

"शुष्मणि प्रणयनाभिसंस्कृते" । [ ] इति । "सात्मन्नात्मनूवेमन्०" [उ. ९१६] इति मनि निपात्यते । बृंहति वर्धते इति बर्हिः । "बंहिबृंहेर्नेलुक् च" [उ. ९९०] इति इस् नकारस्य च लुक् । पुंसि । यद् माला—"बर्हिरुक्तो बृहद्-भानुः" । इति । यथा—बर्हिर्मुखा देवाः । बर्हिः दर्भस्तस्मादुत्तिष्ठतीति बर्हिरुत्थः । "स्थापास्नात्रः कः" [५।१।१४२] इति कः । "दमूच् उपशमे" दाम्यति जलेन दमूनाः । "दमेरुनसूनसौ" [उ. ९८७] इति 'ऊनस्' प्रत्ययः । अगति ऊर्ध्वम् याति अग्निः । "वीयुसुवह्यगिभ्यो निः" [उ. ६७७] इति निः । तत्र । तमोहः, भास्करः, प्रभाकरः, पर्परीकः, मर्मरीकः, सृणीकः, यजतः, पचतः, पचनः, संस्पृशानः, मन्दसानः, पिङ्गलः च ।

## क्षणप्रभा विद्युत्

क्षणम्—क्षणमात्रम् प्रभा अस्याः क्षणप्रभा । विद्योतते विद्युत् । दिद्युत्, सम्पा दन्त्यादिरयम्, तालव्यादिस्तु **अभिधानचिन्तामणौ** उक्त एव । क्षिपण्युः, क्षिपणुः, स्रर्जूः च ।

। समाप्तोऽयं तेजस्कायः ।

अथ वायुकायमाह—

## गन्धवाह-सदागती ।

## वायौ

गन्धस्य वाहोऽस्य गन्धवाहः, गन्धम् वहति वा । "कर्मणोऽण्" [५।१।७२] इति अण् । सदा गतिः—गमनमस्य सदागतिः । "वा गतिगन्धनयोः" "उवै शोषणे" वाति वायति वा द्रव्याणि वायुः । "कृवापाजि०" [उ. १] इति उण् । तत्र । प्राक्-षिक—प्रतीक—क्षिपक—बलाहक—शलाहक—सृणीक—वीक—तरण्ड-सरण्ड-प्राणन्त-वहन्त-शतेर-धूसर-जीर-वीध्र-चुप्र-बताल--मृमल--चलुष-चरण्यु--सरयु-वहति-वायति-अरति-ईष्म-जूर्णि तरुणैतश-आशुशुक्षणयोऽपि ।

। समाप्तोऽयं वायुकायः ।

अथ वनस्पतिकायमाह—

## चरणपोऽपि द्रुः

चरणैः मूलैः पिबति चरणपः । "स्थापास्नात्रः कः" [५।१।१४२] इति कः । "द्रु गतौ" द्रवति द्रुः । "द्रुद्रुम्याम्" [उ. ७४४] इति नुः । अङ्घ्रिपः, उद्भिजः,

वनस्पतिः, पलक्षुः, मलक्षुः, स्फिविः, रवणः, अरडः, सरडः, स्यमीकः, नेपः, पीतुः च।

त्वक् त्वचा

"त्वचत् संवरणे" त्वचति सिरामांसादि त्वक् । क्विप् । "अजादेः" [२।४।१६] इति आपि, त्वचा ।

स्तबके पुनः ॥१००॥

गुलुञ्छु-लुम्बी

स्तूयते स्तबको गुच्छस्तत्र । दृकृनॄसृधृवृमृस्तु०" [उ. २७] इति अकः । गुडचते गुलुञ्छुः । "केवयुभुरण्यध्वर्य्वादयः" [उ. ७४६] 'उ' प्रत्यये निपात्यते । "लुबु तुबुण् अर्दने" लुम्बयति लुम्बिः । "स्वरेभ्य इः" [उ. ६०६] इति इः ।

माकन्दरसालावपि चूतवत् ।

"कदुङ् क्रदुङ् वैक्लव्ये"[1] वैक्लव्यम्–कातरता । वैकल्यम् इति चन्द्रः । मा निषेधार्थकमव्ययम् । मा कन्दते माकन्दः । रसम् अलति रसम् आलाति वा रसालः । च्योतति रसं चूतः । चूष्यत इति श्रीभोजो निरवोचत् । "पुतपित्त०" [उ. २०४] इति उते निपात्यते । वदर्थः पूर्ववदवसेयः । मदिरासख-सचेष्ट-कामाङ्गा अपि । यदाह–

"आम्रश्चूतो रसालश्च सचेष्टो मदिरासखः ।
कामाङ्गः सहकारश्च परपुष्टो मदोत्सवः" ॥

किङ्किराते कुरुण्टक–कुरण्डकावपि स्मृतौ ॥१०१॥

कुत्सितम् किरति–क्षिपति किङ्किरातः । "कृवृकलि०" [उ. २०९] इति आतक् । किञ्चित् किरातः किङ्किरातः, तत्र । "रुटु स्तेये" कौ रुण्टति कुरुण्टकः । "को रुरुण्टिरण्टिभ्यः" [उ. २८] इति अकः प्रत्ययः । कौ रमते कुरण्डः । "पञ्चमाड्डः" [उ. १६८] इति डः, स्वार्थे के, कुरण्डकः ॥१०१॥

कर्कन्धूरपि कर्कन्धौ

करोति कर्कन्धूः । "कृगः कादिः" [उ. ८४९] इति "डुकृग् करणे" इत्यस्मात् ककारादिः अन्धूः प्रत्ययः । यद् वा, कर्को लोहितः अन्धुः, कर्कस्य अन्धुरिव वा कर्कन्धूः । "उतोऽप्राणिनश्चायुरज्ज्वादिभ्य ऊङ्" [२।४।७३] इति ऊङि दीर्घः । स्त्रीलिङ्गः । पक्षे कर्कन्धुः, कुवली । पुंस्त्रीलिङ्गोऽयम् । तत्र । उभावपि पृषोदरादित्वात् साधू । स्निग्धपत्रा, राष्ट्रवृद्धिकरी, गोपघोण्टा, स्निग्धच्छदा, च । यदाह इन्दुः–

1. प्रा. प्रतौ वैकल्य ।

"बदरी स्निग्धपत्रा च राष्ट्रवृद्धिकरी तथा" । चन्द्रोऽपि—

"बदरी गोपघोण्टा च घाण्टा घुट्टा च कोकिला ।
स्निग्धच्छदा कोलफला" इति ।

ह्रस्वादिश्चाटरूषकः ।

अटन् रूषयति अटरूषः । पृषोदरादित्वात् साधुः । ह्रस्वः—दीर्घेतरः अकारोऽस्य ह्रस्वादिः । स्वार्थिके के, अटरूषकः । वैद्यमाता, सिंही, सिंहमुखी च । यदाह अमरः—वैद्यमातृसिंह्यौ तु वाशिका ।

वृषोऽटरूषः सिंहास्यो वासिको वाजिदन्तकः ॥ [२।४।१०३]

वज्रे स्नुहि–स्नुहाऽपि स्यात्

वज्र इव वज्रो भेदकत्वात् तत्र । स्नुह्यति क्षीरम् स्नुहिः । स्त्रीलिङ्गः । "नाम्युपान्त्य०" [उ. ६०९] इति किद् इः । स्नुहा इति वैद्याः । "नाम्युपान्त्य०" [५।१।५४] इति कः । सुधा, गुडा, समन्तदुग्धा च । आह च—

"स्नुक् सुधा च महावृक्षो गुडा निस्त्रिंशपत्रकः ।
समन्तदुग्धा गण्डीरः सिहुण्डा वज्रकन्दकः" ॥

प्रियालोऽपि पियालवत् ॥१०२॥

"प्रीङ्च् प्रीतौ" प्रीयते प्रियालः । "पीङ्च् पाने" पीयते रसोऽस्य पियालः । उभावपि "कुलिपिलिविशिविडिमृणिकुणिपीप्रीभ्यः किद्" [उ. ४७६] इति आले साधू । चारोलीनाम्नी[1] । वदर्यः प्राग्वदवसेयः । खरस्कन्धः, सन्नकद्रुः, धनुःपटश्च । यदाह—

"पियालश्च खरस्कन्धश्चारो बहुलवल्कलः ।
सन्नकद्रुश्चापपटो ललनस्तापसप्रियः" ॥ इति ॥१०२॥

नार्यङ्गोऽपि नारङ्गे

नारीम् अङ्गति-याति नार्यङ्गः । अत एव योषिद्वक्त्राधिवासनः । आह च—

"नारङ्गस्त्वक्सुगन्धः स्यान्नागरङ्गो मुखप्रियः ।
स चैरावतकः प्रोक्तो योषिद्वक्त्राधिवासनः" ॥

इति । "नॄश् नये" नृणाति नारङ्गः । "सृवृनृभ्यो णित्" [उ. ९९] इति अङ्गः । तत्र ।

---

१ प्रा. प्रतौ राजादनमाम्नी ।

अक्षे विभेदक इत्यपि ।

अक्षति-व्याप्नोति अक्षः । तत्र । बिभेति विभेदकः । यदाह—

विभीतकः कर्षणफलो वासन्तोऽक्षः कलिद्रुमः ।
संवर्त्तको भूतवासः कर्षो हार्यो विभेदकः ॥

दैन्यः, मधुबीजः, धर्मद्वेषो, कल्कः च ।

**भवेत् तमालस्तापिच्छः**

ताम्यति तमालः । "ऋकृमृ०" [उ. ४७५] इति आलः । तापिनश्छादयति तापिच्छः । "क्वचित्" [५।१।१७१] इति डः । कालस्कन्धः, रजनः, वसुः च ।

**निर्गुण्ठी सिन्दुवारवत् ॥१०३॥**

"गुठुण् वेष्टे[1]" "नाम्युपान्त्य०" [५।१।५४] इति के गुण्ठः, निष्क्रान्ता गुण्ठाद् वेष्टनादिति निर्गुण्ठी । स्यन्दते सिन्दुवारः । "द्वारश्रृङ्गार०" [उ. ४११] इति आरे निपात्यते । वदर्थः पूर्ववद् भावनीयः । सिन्दुकः, सिन्धुकः, इन्द्रसुरसः, इन्द्राणी, नीलपुष्पम्, शीतसहः च । आह च—

अथ सिन्दुकः ।
सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ॥

**अन्योप्याह—**

सिन्दुवारः सितपुष्पः सिन्धुकः सिन्धुवारितः ।
नीलपुष्पं शीतसहो निर्गुण्डी नीलसिन्दुकः ॥
॥१०३॥

**जपा जवा**

जपतीव जपा । "जपादीनां पो वः" [२।३।१०५] इति पस्य वत्वे जवा । ओड्रपुष्पम् ।

**मातुलिङ्गो मातुलुङ्गोऽपि कीर्तितः ।**

मा तोल्यते मातुलिङ्गः, मातुलुङ्गः । "माङस्तुलेरुङ्गक् च" [उ. १०६] इत्यनेन माङ्पूर्वात् "तुलण् उन्माने" इत्यस्माद् उङ्गक्–इङ्गक्प्रत्यययोः साधू । यदाह—

---

१ प्रा. गुठिण् वेष्टे ।

फलपूरो बीजपूरः केसरी बीजपूरकः ।

बीजकः केसराम्लश्च मातुलुङ्गस्तु पूरकः ।

बीजपूर्णः, अम्लकेसरः, वराम्लः, मध्यकेसरः, कृमिघ्नः, गन्धकुसुमः, शीधुपादपः च ।

**धत्तूर इव धुत्तूरः**

दधाति पीतवर्णं धत्तूरः । धुनोति धातून् धुत्तूरः । उभावपि "सिन्दूरकर्चूरपत्तूरधुत्तूरादयः" [उ. ४३०वृत्तौ] इति ऊरे निपात्येते । "धुवो द्विरुक्तस्तोऽन्तो ह्रस्वश्च" [उ. ४३०वृत्तौ] । उन्मत्तः, कितवः, धूर्तः, मातुलः, मदनः च । यदाह—

धत्तूरकः स्मृतो धूर्तो देवता कितवः शठः ।

उन्मत्तको मदनकतरुस्तलफलस्तथा ॥

अमरोऽप्याह—

उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः । [२।४।७७] मातुलो मदनश्च [२।४।७८] धुर्धूरोऽपि । यदाह यादवः—उन्मत्तधूर्त्तधुर्धूराः ।

**वंशस्त्वक्सार इत्यपि ॥१०४॥**

वमति वंशः । "पादावमि०" [उ. ५२७] इति शः । त्वचि सारः त्वक्सारः। "अद्व्यञ्जनात्०" [३।२।१८] इति विकल्पेन सप्तमीलुप् । कर्मारः, तेजनः च । यदाह—

वंशे त्वक्सार-कर्मार-त्वचिसार-तृणध्वजाः ।

शतपर्वा यवफलो वेणु-मस्कर-तेजनाः ॥

॥१०४॥

**ह्रीबेरं केश-सलिलपर्यायैः स्मर्यते बुधैः ।**

जिह्रेतीव ह्रीबेरम्, वालकम् । "शतेरादयः" [उ. ४३२] इति केरे निपात्यते । केशसदृशत्वात् केशम्, वालः कच इत्यादयः । तृड्घ्नत्वात् सलिलम्, जलम् । तत्पर्यायैः स्मर्यते-कथ्यते बुधैः । यदाह—

वालकं वारि तोयं च ह्रीबेरं जलकं रुचम् ।

केशं वज्रमुदीच्यं च पिङ्गमाचमनं कचम् ॥

**पङ्कजिन्यां कमलिनी सरोजिनी कुमुद्वती ॥१०५॥**

पङ्कजम् अस्त्यस्यां पङ्कजिनी, तस्याम् । कमलम् अस्त्यस्यां कमलिनी । सरोजम् अस्त्यस्यां सरोजिनी । एवं सरोरुहिणी, अम्भोजिनी, अब्जिनी, राजीविनी, अरविन्दिनी इत्यादि । सर्वेऽप्येते "मन्माऽब्जादेर्नाम्नि" [७।२।६७] इति 'इन्' प्रत्यये साधवः । कुमुदम् अस्त्यस्यां कुमुद्वती । "नडकुमुद०" [६।२।७४] इति डित् मतुः ॥१०५॥

**बिसप्रसूनं कमले**

बिसात् प्रसूनम् जातं बिसप्रसूनम् । बिसात् प्रसूयते वा । "सूयत्यादि०" [४।२।७०] इति क्तयोः तस्य नत्वम् । कम्–अम्भः अलति–भूषयति कमलम् । काम्यते श्रिया वा । "मृदिकन्दि०" [उ. ४६५] इति अलः, तत्र ।

**कुमुत्कुमुदवन्मतम् ।**

कौ मोदते कुमुत् । क्विप् । कौ मुद्–हर्षोऽस्य वा । काम्यते वा कुमुदम् । "कुमुद–बुद्बुदा०" [उ. २४४] इति उदे निपात्यते । कौ मोदते वा कुमुदम्–श्वेतकमलम् । "नाम्युपान्त्य०" [५।१।५४] इति कः । वदर्थः प्राग्वत्, मतम्–सम्मतम् ।

**शेपालं च जलनीली**

शेते अम्भसि शेपालम् । "शीङस्तलकपालवालण्वलण्वलाः" [उ.५०१] इति 'पाल'प्रत्यये साधुः । जलम् नीलति जलनीली णीलवर्णे ।

**सातीनोऽपि सतीनवत् ॥१०६॥**

सीदन्ति अनेन सातीनः, सतीनश्च । "दिननग्न०" [उ. २६८] इति ने निपात्यते । उभावपि त्रिपुटाख्यधान्यनाम । वदर्थः पूर्ववद् भावनीयः ॥१०६॥

**कुल्मासवत्कुल्माषोऽपि**

कोलति–संस्त्यायति कुल्मासः । दन्त्यान्तः । "कलिकुलिभ्यां मासक्" [उ.५८४]इति मासक् । कुलेन मस्यति परिणमति वा पृषोदरादित्वात् । "कुल बन्धुसंस्त्यानयोः" कोलति कुल्माषः । अर्द्धस्विन्नो यवादिः, धान्यविशेष इति एके मूर्द्धन्यान्तः । "कुलेश्च माषक्" [उ.५६३] इति माषक् ।

**गवेधुका गवीधुका ।**

"गुङ् शब्दे" गूयते गवेधुका, गवीधुका च । "गुङ ईधुकैधुकौ" [उ. ७४] इत्यनेन पूर्वस्य एधुकः इतरस्य ईधुकः प्रत्ययः । गवा अम्भसा एधते वा गवेधुः । स्त्रीलिङ्गः । "भृमृतॄ०" [उ. ७१६] इति बहुवचनाद् उः, ततः स्वार्थिके के, गवेधुका–हलादनुत्पन्नमन्नम् ।

**कणिशं कनिशम्**

"कण शब्दे" कणति वातेन कणिशम्, सस्यमञ्जरी । "कन दीप्त्यादौ" कनति कनिशम् । उभावपि "कुलिकनिकणि०" [उ. ५३५] इति किद् 'इश' प्रत्यये साधू । पुंक्लीबलिङ्गौ ।

रिद्धे धान्ये त्वावासितं मतम् ॥१०७॥

राध्यति स्म रिद्धम्, सिद्धमित्यर्थः। सुसम्पन्नम् इत्येके। पृषोदरादित्वाद् इत्वम्। तस्मिन् रिद्धे धान्ये–सस्ये आ समन्तात् वास्यते–मील्यते स्म आवासितम्-निष्पन्नम् ॥१०७॥

हालाहलं तथा हालम्

हालेव हलतीति हालाहलम्[1]। पुंसि, वामनः। क्लीबे लक्ष्यम्।

यथा—स्निग्धं भवत्यमृतकल्पमहो कलत्रम्।
हालाहलं विषमिवाऽप्रगुणं तदेव।

एकदेशविकृतस्याऽनन्यत्वात् हालहलोऽपि। यथा—

"काममपायि मयेन्द्रियकुण्डै–र्यदपि दुष्कृतहालहलौघः"। हलति–विलिखति जठरम् हालम्। वा ज्वलादित्वाद् णः। पुंक्लीबलिङ्गावुभौ।

मुस्तायां मुस्तकोऽपि च।

मुस्यति—खण्डयति मुस्ता। त्रिलिङ्गः। "शीरीभूदूमूघृपा०" [उ. २०१]. इति कित् तः। तत्र। स्वार्थिके के, मुस्तकम्। पुंक्लीबलिङ्गः। यद् अमरः–

कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्। [२।४।१५९]

यदाह–धन्वन्तरिः—

मुस्तमम्बुधरो मेघो घनो राजकसेरुकः।
भद्रमुस्तो वराहोऽब्दो गाङ्गेयः कुरुविन्दकः।

। समाप्तोऽयं वनस्पतिकायः।

पृथिव्यादीनेकेन्द्रियानभिधाय द्वीन्द्रियानाह—

कृमिः क्रिमिरपि

करोति खर्जूं कृमिः। "कृभूभ्यां कित्" [उ. ६९०] इति कित् मिः। "क्रमू पादविक्षेपे" क्रामति[2] अपाने कृमिः। "क्रमितमि०" [उ. ६१३] इति कित् इः प्रत्ययः। धातोः अकारस्य च इकारः। शर्शरीकः च। कृमिनाम्नी। स्यमीकः, सीमिकः, करण्डः, सरण्डः, रमठः, मरठः च। इत्यादीनि कृमिजातिनामान्यपि प्रक्रमात् ज्ञेयानि।

गण्डूपदः किञ्चुलुकोऽपि च ॥१०८॥

गण्डवः–ग्रन्थयः पदानि अस्य गण्डूपदः भूलता। यस्य "अलसिक"

---

१. प्रा. हालाहलः। १. प्रा. काम्यति।

इति प्रसिद्धिः। "चुलुम्प उच्छेदे" किञ्चित् चुलुम्पति किञ्चुलुकः। "कञ्चुकांशुक-नंशुकपाकुक०" [उ. ५७] इति उके निपात्यते ॥१०८॥

**शम्बूका अपि शाम्बूकाः**

शाम्यन्ति शम्बूकाः, शाम्बूकाः। "शम्बूकशाम्बूकवृधूकमधूक०" [उ. ६१] इति ऊके उभावपि निपात्येते। "शमेर्वोऽन्तो दीर्घश्च वा" स्यात् [उ. ६१ वृत्तौ]। शङ्खः, अञ्जपर्व, कणीचयोऽपि।

। उक्ता द्वीन्द्रियाः।

चतुरिन्द्रियानाह—

**वृश्चिको द्रुत इत्यपि।**

"ओवृश्चैत् छेदने" वृश्चति वृश्चिकः। "पापुलिकृषिकुशिवृश्चिभ्यः" [उ. ४१] इति किद् इकः। "द्रु गतौ" द्रवति द्रुतः। द्रूयते स्म वा। शालूकोऽपि।

**भसलो मधुकरोऽली च**

भासते गुञ्जन् भसलः। "मुरलोरल०" [उ. ४७४] इति अले निपात्यते। देश्यामप्ययम्। मधु करोति मधुकरः। "अच्" [५।१।४९] इति अच्। अलति शोभते इत्येवंशीलो अली—भ्रमरः नन्तः अयम्, गदयित्नुः, रसायुः, रवणः, मधुपः, षट्पदः, षट्चरणः च। सर्वेऽप्येते स्त्रीपुंसलिङ्गाः।

। उक्तौ चतुरिन्द्रियौ।

अथ पञ्चेन्द्रियान् स्थलचर—खचर—जलचरभेदभिन्नान् क्रमेणाह—

**पिक्को विक्कः**

"पिजुकि सम्पर्चने" सम्पर्चनम्—मिश्रणम्। पिङ्क्ते पिक्कः। "निष्क-तुरुष्कः०" [उ. २६] इति के निपात्यते। "विचूंपी पृथग्भावे" विङ्क्ते अवयवान् विक्कः। "विचिपुषि०" [उ. २२] इति कित् कः। विंशतिवर्षो हस्ती।

**करिः करी ॥१०९॥**

करोति प्रमोदम् करिः। "स्वरेभ्य इः" [उ. ६०६] इति इः। करः—शुण्डाऽस्त्यस्य करी। हस्ती, चन्दिरः, कूचः, कुन्त्रः, वघूलः, वेञ्चुलः[1], पीलुः, पपीः, शद्रिः, सद्रिः, मदारः, अङ्गूषः, पीनुः, अभ्रतिः, काणूरः च ॥१०९॥

**व्यालो व्याडोऽपि**

विविधम् आलम्—अनर्थोऽस्माद् व्यालः। व्यडति—हन्तुं समर्थो भवति व्याडः, दुष्टगजः।

---

१. प्रा. वञ्चूलः।

उपवाह्योऽप्यौपवाह्ये

उप—समीपे वाह्यते उपवाह्यः, राजवाह्यो हस्ती । "ऋवर्णव्यञ्जना०" [५।१।१७] इति घ्यण् । उपवाह्य एव औपवाह्यः । स्वार्थे अण् प्रत्ययः ।

अपराऽवरा ।

अपरभागभवत्वात् अपरा । स्त्रीक्लीबलिङ्गः । "जपादीनां पो वः" [२।३।१०५] इति पस्य वत्वे अवरा । गजस्य पश्चाद्भागस्तन्नाम्नी ।

शृङ्खलो निगलोऽन्दूश्च

शृणाति बन्धेन शृङ्खलः । त्रिलिङ्गः । "श्रो नोऽन्तो ह्रस्वश्च" [उ. ४९८] इति, "शॄश् हिंसायाम्" इत्यस्मात् खलः प्रत्ययो नकारोऽन्तो ह्रस्वश्च भवति । निगल्यते—बध्यतेऽनेन निगलः । अन्दति—बध्नाति अन्द्यते वा अन्दूः । "कृषिचमि०" [उ. ८२९] इति ऊः ।

कक्षा कक्ष्यापि

"कष हिंसायाम्" कषति कक्षा । "मावावदि०" [उ.५६४] इति सः । कक्षायाम्—मध्यप्रदेशे भवा कक्ष्या, अयं योपान्त्यः । वस्त्रनाम्नी ।

वाल्हिके ॥११०॥

वाल्हीकः

वाल्हिकेषु देशे भवो वाल्हिकः, वाल्हिकेषु देशे भवो वाल्हीकः । वाल्हिक-देशोत्पन्नो घोटकः ।

वल्ग-वागे च

"वल्ग गतौ" वल्गति अनेन वल्गः । पुंलिङ्गः । "व्यञ्जनाद् घञ्" [५।३।१३२] इति घञ् । "वा गतिगन्धनयोः" वाति गच्छति अनया वागा । "गम्यमि-रम्यजिगद्यदि०"[उ.९२] इति बहुवचनाद् गः । रश्मिनाम्नी ।

खलिनं च खलीनवत् ।

"खल सञ्चये च, चकाराच्चलने" खलति खलिनम् । "श्याकठिखलि०" [उ. २८२] इति इनः । पुंक्लीबलिङ्गः । खलति—चलति खलीनम् । "खलिहिंसिभ्या-मीनः" [उ.२८६] इति ईनः । वदर्थः पूर्ववदवसेयः । कविकनाम्नी ।

मयुरुष्ट्रे

"डुमिग्ॄ प्रक्षेपणे" मिनोति मयुः । "मिवहिचरिचटिभ्यो वा" [उ.७२६] इति उः प्रत्ययः । मरौ भवो मर्यः । "भवे" [६।३।१२३] इति यः, मरिशब्दस्य इदन्तत्वात् । "छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्य०" [३।१।१२३]इति

पाणिनीयसूत्रेण वा "मृंत् प्राणत्यागे" इत्यस्मात् 'यत्'प्रत्यये मर्य इत्यपि। उष्यते—दह्यते मरौ उष्ट्रः। "सूमूखन्युषिभ्यः किद्" [उ.४४९]इति कित् त्र। तत्रद्व। दीर्घजङ्घः, ग्रीवी, भेरः, धूम्रः च, स्वार्थिके के, धूम्रकोऽपि।

**गोपतौ तु शण्ड इत्वर इत्यपि ॥१११॥**

गवां पतिः गोपतिः गोवृषः, तत्र। "शमूच् उपशमे" शाम्यति शण्डः। "पञ्चमाड्डः" [उ.१६८] इति डः। अयनशील एति—गच्छति वा इत्वरः॥ "सृजीण्नशष्ट्वरप्" [५।२।७७] इति वरप् ॥१११॥

**स्थौरी स्थूर्यपि**

स्थूराणाम्—पश्चाज्जङ्घाभागानामिदं स्थौरम्—बलम् तदस्यास्तीति स्थौरी। स्थूराः—जङ्घाप्रदेशाः सन्त्यस्य स्थूरी, पृष्ठवाह्यः। यत्पृष्ठे जलादिकमुह्यते।

**ककुदे ककुत् कुकुदमित्यपि।**

ककते ककुदम्। पुंक्लीबः। "ककेर्णिद्वा" [उ.२४३] इति, "ककि लौल्ये" इत्यस्माद् उदः प्रत्ययः। ककते ककुत्। बाहुलकाद् उद्। "कुकि वृकि आदाने" कोकते कुकुदम्। "कुमुदबुदबुदादयः" [उ.२४४] इति उदे निपात्यते। वृषभस्कन्धकूटनामानि।

**नैचिकं नैचिकी च स्यात्**

नीचैश्चरति नैचिकम्। "चरति" [६।४।११] इति इकण् "अणञेये०" [२।४।२०] इति ङ्याम्, नैचिकी। "प्रायोऽव्ययस्य" [७।४।६५] इति अन्त्यस्वरादिलोपः। वृषभशिरोनाम्नी।

**मलिनी बालगर्भिणी ॥११२॥**

मलोऽस्त्यस्यां मलिनी। "मलादीमसश्च" [७।२।१४] इति इन् प्रत्ययः। बाला चासौ गर्भिणी च बालगर्भिणी। मलिनी बालगर्भिणी [ ]इति **माला** ॥११२॥

**पवित्रं गोमये**

पूयतेऽनेन पवित्रम्। "ऋषिनाम्नोः करणे" [५।२।८६] इति इत्रः। पवित्रत्वाद् वा। गोः पुरीषम् गोमयम्। पुंक्लीबलिङ्गः। "गोः पुरीषे" [६।२।५०]इति मयट्। गोविट्, तत्र।

**छागे शुभः**

छ्यति छागः। "गम्यमि०" [उ. ९२]इति गः। तत्र शोभते शुभः। "नाम्युपान्त्य०" [६।१।५४] इति कः। "शुभच्छागवस्तच्छगलका अजे" [२।९।७६]इति

अमरः । वृष्णिः, वरुटः, वरुडः, गण्डयन्तः, अमतिः च[1] ।

**अथ भषकः शुनिः ।**

भषति भुक्कति भषकः । "तिकृकृतौ नाम्नि" [५।१।७१]इति अकट् । "भष भर्त्सने" भर्त्सनम्–कुत्सितशब्दकरणम्, अतो भर्त्सने शब्दकर्मकोऽयम् । शुनति गच्छति शुनिः । "नाम्युपान्त्य०" [उ.६०९] इति किद् इः । दशेरः, भटिलः, भण्डिलः, चण्डिलः, लेहडः, गृत्सः च ।

**सरमा देवशुन्यां च**

सरति गच्छति सरमा । "सृपृप्रथिचरि०" [उ.३४७] इति अमः । देवानाम् शुनो देवशुनी, तस्याम् । विशेषवृत्तिरयं सामान्येऽप्यभिधीयते ।

**यमरथोऽपि सैरिभे ॥११३॥**

यमस्य रथो यमरथः । सीयते–बध्यते सैरिभः । "सि-टिकिभ्यामिभः सैर- टिट्टौ च" [उ. ३३२] इत्यनेन इभः प्रत्ययः । "षिंगट् बन्धने" इत्यस्य दन्त्यादिः, 'सैर' इत्यादेशश्च । सीरिभिः–दान्तैर्भाति सीरिभः, तस्यायमिति वा । "तस्येदम्" [६।३।१६०] इति अण्, तस्मिन् सैरिभे–महिषे गर्वरोऽपि ॥११३॥

**पारिन्द्र इव पारीन्द्रः**

पारिषु शक्तेषु इन्द्रः पारिन्द्रः ।। पृषोदरादित्वाद् ह्रस्वः । ह्रस्वाभावे च पारीन्द्रः । सिंहः, नदनुः, मृगेन्द्रः, कपिलाक्षः च । इव शब्दो वदर्थवाचकः ।

**शरभेऽष्टापदोऽपि च ।**

"शॄश् हिंसायाम्" शृणाति हस्तिनम् शरभः । "कृशॄगॄशलिकलि०" [उ.३२९] इति अभः, तत्र । अष्टौ पदानि अस्य अष्टापदः । "नाम्नि" [३।२।७५] इति दीर्घः । कर्वरोऽपि ।

**सृगालवच्छृगालोऽपि**

सरति गच्छति भयेन सृगालः । "सर्तेर्गोऽन्तश्च" [उ.४७८] इति आलः । असृगाऽऽलीयते, असृग् गिलतीति वा सृगालः । पृषोदरादित्वात् । शृणाति शृगालः, तालव्यादिरयम् । "चात्वालकङ्काल०" [उ.४८०] इति आले निपात्यते ।

**प्लवगः प्रवगोऽपि च ॥११४॥**

प्लवेन गच्छति प्लवगः । प्रवेण गच्छति प्रवगः । प्लवप्रवौ गतिविशेषवाचकौ ।

---

१. प्रा. अमन्तिश्च ।

"नाम्नो गमः खड्डौ च०" [५।१।१३१] इति डः। प्लवप्रवंगमौ अपि वानर-नाम्नी ॥११४॥

**वानायुरपि वातायुः**

वानम्-शुष्कम् अयते वानायुः, वानमेति वा। वातमेति वातायुः हरिणः। उभयत्र "कृवापाजि०" [उ. १] इति–उण्। वातमजः, हर्षुलः, रौहिषः, श्येतः, सरासरः, मरूकः च।

**उन्दरोऽपि च मूषके।**

"उन्दप् क्लेदने" उनत्ति उन्दरः। "जठरऋकरमकर०" [उ.४०३] इति अरे निपात्यते। "लुप् मूष स्तेये" मूषति मूषकः। "नाम्नि पुंसि च" [५।३।१२१] इति णकः। तत्र। किरिः, मुष्मः, कुषाकुः, कर्वः च।

**ह्रीकुर्वनविडालोऽपि**

"ह्रींक् लज्जायाम्" जिह्रेतीव आखुवधसङ्कोचेनेति ह्रीकुः। "ह्रियः किद् रो लश्च वा" [उ. ७५०] इति कित् कुः। वनस्य-अरण्यस्य बिडालो वनबिडालः। दरुटः, दरुडः, बिलालः च।

**गोकर्णोऽपि भुजङ्गमे ॥११५॥**

गावौ–दृशावेव कर्णौ अस्य गोकर्णः। भुजेन कौटिल्येन भुज इव वा गच्छतीति भुजङ्गमः सर्पः, तत्र। "नाम्नो गमः खड्डौ च०" [५।१।१३१] इति खः। काणूरः शृदरः, दशेरः, दश्रः, तालव्यमध्याविमौ, सृप्मा, सृत्वा, मर्क्कः, सूर्पः च दन्त्यादिरयम् ॥११५॥

**जलव्यालेऽलीगर्दोऽपि**

जलस्य व्यालो जलव्यालः। अली-भ्रमर इव गर्दति--शब्दायते अलीगर्दः।

**शेषः स्यादेककुण्डलः।**

श्लिष्यति अस्मिन् धात्रीति शेषः। "श्लिषेः शे च" [उ. ५४३] इति षः। शिष्यत इति वा। शेते अस्मिन् हरिः इत्यन्ये। एकं कुण्डलमस्य एककुण्डलः।

**आशीराशी च दंष्ट्रायाम्**

आशास्यते–हिंस्यते अनया आशीः। यदाह—

"आशीस्तालुगता दंष्ट्रा यया विद्धो न जीवति।" इति।

क्रुत्सम्पदादित्वात् क्विप्, ततः "क्वौ" [४।४।११९] इति इस् आदेशः। पृषोदरादित्वाद् रकारलोपे आशी। यथा—आशीविषः। उभावपि स्त्रियाम्। दंष्ट्रायां सर्पस्येति शेषः।

निर्मोके निर्लयन्यपि ॥११६॥

निर्मुच्यते निर्मोकः। घञ् प्रत्ययः। तत्र निर्मोके—सर्पत्वचि। नितरां लीयते अस्यां निर्लयनी। "करणाऽऽधारे" [५।३।१२९] इति अनट्। निहाकोऽपि ॥११६॥

। उक्ताः स्थलचराः पञ्चेन्द्रियाः।

अथ खचरानाह—

विहगे पतत्रिरपि

विहायसा गच्छति विहगः। "नाम्नो गमः खड्डौ च०" [५।१।१३१] इति डः प्रत्ययो विहायसो विहः च, तत्र। पतति—गच्छति पतत्रिः। "पतेरत्रिः" [उ. ६९७] इति अत्रिः। वर्वरीकः, पतेरः, कथेरः, विहडः, तिन्तिडीकः, कवाकः, हीकः, श्येत्यः तालव्यादिरयम्, रवणः, जर्ण्णः, किकीदिविः, कुक्कणः, मणचः, रुवथः, अणसः, शररः[1] तालव्यादिरयम्, चपुषः, वारङ्गः च।

पिच्छं पिञ्छमपि स्मृतम्।

पीयते पिच्छम्। "पीपूडो ह्रस्वश्च" [उ. १२५] इति छक्। "गुलुञ्छपिलिपिञ्छैधिच्छादयः" [उ. १२६] इति 'छे'निपातनात् पिञ्छम्। स्मृतम्—कथितम्।

परपुष्टान्यभृतौ च पिके

परेण पुष्यते स्म परपुष्टः। अन्येन भ्रियते—पुष्यते अन्यभृतः। काकीपुष्टत्वात्। पिबति चूतरसम् पिकः। "पापुलिकृषि०" [उ. ४१] इति किद् इकः। अपि कायति वा पृषोदरादित्वात्। तत्र। घोषयित्नुः, पोषयित्नुः, वश्वथः, उदिश्वः च।

बर्हिणि बर्हिणः ॥११७॥

बर्हाणि सन्ति अस्य बर्ही, मयूरः तत्र। "शिखादिभ्य इन्" [७।२।४] इति इन्। बर्हाणि सन्त्यस्य बर्हिणः। "फलबर्हात्०" [७।२।१३] इति इनः। "बृह वृद्धौ" बर्हतीति वा। "द्रुहवृहिदक्षिभ्य इणः" [उ. १९४] इति इणः। मोरः, सहसानः, जीवथः, आपतिकः, मरूकः, कमठः च ॥११७॥

वायसे बलिपुष्टोऽपि

"वयि गतौ" वयते वायसः। "सृवयिभ्यां णित्" [उ. ५७०] इति असः। तत्र। बलिना पुष्टः बलिपुष्टः। अत एव बलिभुक्, वैश्वदेवभागार्हत्वात्। वञ्चथः, काणुकः, नभाकः, वर्विः च।

---

१. प्रा. शराटः।

द्रोणोऽपि द्रोणकाकवत् ।

"द्रुणत् गतिकौटिल्ययोः च" चकारात् हिंसायाम् द्रुण्यते द्रोणः । घञ् । "द्रुं गतौ" द्रवति वा । "द्रोर्वा" [उ. १८४] इति णः । द्रोणश्चासौ काकश्च द्रोणकाकः । वृद्धकाकोऽद्रिकाको वा । **यदाहुः**—

द्रोणकाको दग्धकाको वृद्धकाको वनाश्रयः ।

इति । वदर्थः प्राग्वदवसेयः ।

**सारस्यां लक्ष्मणी**

सरति सारसः । "सृवयिभ्यां णित्" [उ. ५७०] इति असः । सरसि भवो वा । "भवे" [६।३।१२३] इति अण्, "अणञेये०" [२।४।२०] इति ङ्याम् सारसी, तस्याम् । लक्ष्मणस्य–सारसस्य स्त्री लक्ष्मणी । "धवाद् योगादपालकान्तात्" [२।४।५९] इति ङीः ।

**क्रौञ्च्यां क्रुञ्चा**

"क्रुञ्च् गतौ" क्रुञ्चति क्रुङ्, क्विप्, क्रुङेव क्रौञ्चः । प्रज्ञादित्वाद् अण्, "अणञेये०" [२।४।२०] इति ङ्याम्, क्रौञ्ची, तस्याम् । अजादित्वाद् आपि, क्रुञ्चा ।

**चाषे दिविः किकिः ॥११८॥**

**किकिदीविरपि प्रोक्तः**

चष्यते –भक्ष्यते श्येनेन चाषः, तत्र । दीव्यति दिविः । "पदिपठि०" [उ. ६०७] इत्यादिना इः । "कैं शब्दे" कायति शुभम् किकिः । "कायः किरिच्च वा" [उ. ६२३] इति किः प्रत्ययो धातोश्च इकारान्तादेशः । स्त्रीलिङ्गः । किकीति कुर्वन् दीव्यति किकिदीविः । "छविछिविस्फविस्फिवि०" [उ. ७०६] इति 'वि' प्रत्ययो निपातनात् । किकिपूर्वाद् दीव्यतेः दीर्घश्च । "किकिदिविसंज्ञश्चाषः" इति **वोपालितेन** सर्वे ह्रस्वाः पठिताः । दीव्यतीति दीविरपि । अनेनैव 'वि' प्रत्यये निपात्यते ।

**टिट्टिभे टीटिभोऽपि च ।**

"टिकि गतौ" टेकते टिट्टिभः । "सिटिकिभ्यामिभः०" [उ. ३३२] इति इभः । टिकेश्च टिट्ट् इत्यादेशः । टिट्टीति भाषते वा । "क्वचित्" [५।१।१७१] इति डः । टी टीति कुर्वन् भाति–दीप्यते भाषते वा टीटिभः । "क्वचित्" [५।१।१७१] इति डः । उच्छीथोऽपि ।

कलविङ्के–कुलिङ्कोऽपि

कलते शब्दायते कलविङ्कः। "कलेरविङ्कः" [उ. ६५] इति 'अविङ्कः' प्रत्ययः। चटकस्तत्र। "कुल बन्धुसंस्त्यानयोः"। कोलति कुलिङ्कः। "कुलिचिरिभ्यामिङ्कक्" [उ. ६४] इति इङ्कक्। स्वार्थिके के, कुलिङ्कक इत्ययमुक्तोऽभिधानचिन्तामणौ।

दात्यूहे कालकण्ठकः ॥११९॥

दात्योहोऽपि

ददाति आनन्दम् दात्यूहः। "दस्त्यूहः" [उ.५९४] इति त्यूहः, तत्र। कालः कण्ठोऽस्य कालकण्ठः। स्वार्थिके के, कालकण्ठकः। ददाति आनन्दम् दात्योहः। बाहुलकात् 'त्योहः' प्रत्ययः।

बलाका बकेरुका बिसकण्टिका।

बलम् अकति बलाका। "बल प्राणनधान्यावरोधयोः" बलति वा। "शलिबलिपति०" [उ. ३४] इति आकः। बकैरुच्यते बकेरुका। घञि, पृषोदरादित्वात् साधुः। बिसमिव कण्टोऽस्याः बिसकण्टिका।

मेधाव्यपि शुके

मेधा विद्यतेऽस्य मेधावी। "अस्तपोमायामेधास्रजो विन्" [७।२।४७] इति विन्। शवति शुकः। "विचिपुषि०" [उ. २२] इति कित् कः। "शुक गतौ" शोकति गच्छति वा। "अच्" [५।१।४९] इति अच्।

तैलपायिकायां निशाटनी ॥१२०॥

तैलम् पिबतीति तैलपायिका—णकः प्रत्ययः—नित्यमास्यविकासात्। निशायाम् अटति–गच्छति निशाटनी। "अनट्" [५।३।१२४] इति अनट्। वल्गुलिकानाम्नी ॥१२०॥

कपोते पारावतोऽपि

"कबृङ् वर्णे" कब्यते कपोतः। "कबेरोतः प् च" [उ.२१७] इति ओतः। धातोर्बकारस्य पत्वं च, तत्र। पारम् आपतति पारापतः। "जपादीनां पो वः" [२।३।१०५] इति पस्य वत्वे पारावतः।

उक्ताः खचराः पञ्चेन्द्रियाः।

अथ जलचरानाह—

मत्स्ये मच्छः

माद्यति जलेन मत्स्यः। "मदेः स्यः" [उ. ३८३] इति स्यः, तत्र। "मदैच् हर्षे" माद्यति पानीयेन मच्छः। "तुदिमदिपद्यदि०" [उ. १२४] इति 'छक्' प्रत्ययः।

अथ तन्तुणे ।

**स्मृतो वरुणपाशोऽपि**

तन्तुवत् तुणति–कुटिलीभवति तन्तुणः–पृषोदरादित्वात्–ग्राहस्तत्र । वरुणस्येव पाशोऽस्य वरुणपाशः ।

**नक्रे शङ्कुमुखोऽपि ॥१२१॥**

न न क्रामति नक्रः, कुम्भीरः । "नञः क्रमिगमि०" [उ. ४] इति डिद् 'अः' प्रत्ययः । नखादित्वाद् एकस्य नञो लोपः अपरस्य अदभावः । तत्र । शङ्कोः–कीलकस्येव मुखमस्य शङ्कुमुखः ॥१२१॥

**उहारः कूर्मः**

"उहतुहदुह अर्दने" ओहर्ति[1] अर्दयति उहारः । "द्वारशृङ्गार०" [उ. ४११] इति आरे निपात्यते । "नाम्युपान्त्य०" [५।१।५४] इति के । उहः पीडा तम् इयर्ति–प्राप्नोतीति वा । किरति कुरति वा[2] कूर्मः । "रुक्मग्रीष्म०" [उ. ३४६] इति 'मे' निपात्यते । पुटीरः, पीथः च ।

**इत्येष तिर्यक्काण्डः शिलोञ्छितः ।**

इति–अमुना प्रकारेण एष–उक्तत्वेन प्रत्यक्षः तिर्यक्काण्डः श्रीहैमनाममालाचतुर्थकाण्डः शिलोञ्छितः शिलोञ्छीकृत इत्यर्थः ।

इति श्रीमद्बृहत्खरतरगच्छीय–श्रीजयसागरमहोपाध्यायसन्तानीय-
वाचनाचार्यश्रीभानुमेरुगणिशिष्यमुख्य–श्रीज्ञानविमलो-
पाध्यायविनेय-वाचनाचार्यश्रीवल्लभगणिविरचितायाम्
**श्रीहैममनाममालाशिलोञ्छटीकायाम्**
चतुर्थतिर्यक्काण्डस्य **शिलोञ्छः** समाप्तः ।

---

१ ज. ओहयति । २ जे. 'कुरति वा' नास्ति ।

# पञ्चमो नारककाण्डः

अथ पञ्चमनारककाण्डस्य शिलोञ्छो विव्रियते—

**नारकास्तु नैरयिकाः**

नरके भवा नारकाः। "भवे" [६।३।१२३] इति अण्। निरये भवा नैरयिकाः। "भवे" [६।३।१२३] इति इकण्। यौगिकत्वात् नारकिक–नारकीयादयोऽपि।

**पाताले तु तलं रसा ॥१२२॥**

पतन्ति अस्मिन् पातालम्। "पतिकठिभ्यो णित्" [उ. ४७९] इति आलः। पातम् अलतीति वा। तलति तलम्। "अच्"। रस्यते रसा। भीमो भीमसेन इति न्यायाद् वा। तलम् रसा ॥१२२॥

**इति पञ्चमकाण्डस्य शिलोञ्छोऽयं समर्थितः।**

इति अमुना प्रकारेण श्रीहैमनाममालायाः पञ्चमनारककाण्डस्य अयम् उक्तत्वेन प्रत्यक्षः शिलोञ्छः समर्थितः—विरचित इत्यर्थः।

इति श्रीमद्बृहत्खरतरगच्छीय–श्रीजयसागरमहोपाध्यायसन्ता-
नीय–वाचनाचार्यश्रीभानुमेरुगणिशिष्यमुख्य–श्रीज्ञान-
विमलोपाध्यायविनेय–वाचनाचार्यश्रीवल्लभ-
गणिविरचितायां श्रीहैमनाममालाशिलोञ्छ-
टीकायां पञ्चमनारककाण्डस्य
शिलोञ्छः समाप्तः।

## षष्ठः सामान्यकाण्डः

उक्ता देवाधिदेवा मुक्ताः, संसारिणश्चतुर्गतयो देवा मर्त्यास्तिर्यञ्चो नारकाश्च क्रमादसाधारणाङ्गसहिताः पञ्चभिः-पञ्चभिः काण्डैरिदानीं तत्साधारणनामाभिधायिषष्ठसामान्यकाण्डस्य शिलोञ्छो विव्रियते—

**जीवोऽपि चेतने**

"जीव प्राणधारणे" जीवति जीवः । अच् । चेतनाशीलश्चेतनः । व्यञ्जनान्तत्वाद् "इङितः०" [५।२।४४] इति अनः । चेतयते वा । "रम्यादिभ्यः" [५।३।१२६] इति कर्त्तरि अनट् । तत्र । अत्कः, अन्नः च ।

**जन्तौ प्राणी**

"जनैचि प्रादुर्भावे" जायते जन्तुः । पुंक्लीबलिङ्गस्तत्र । "कृसिकमि०" [उ. ७७३] इति तुन् । प्राणाः सन्ति अस्य प्राणी । प्राणवान्, मरतः, मर्तः, अमतः, कणी-चिः, मन्दसानः, वयोधाः च ।

**जन्मोऽपि जन्मनि ॥१२३॥**

जायते जन्मः । "रुक्मग्रीष्म०" [उ. ३४६] इति मान्तो निपात्यते । "मन्०" [५।१।१४७] इति मनि जन्म उत्पत्तिस्तत्र । सुवनः, योनिः, जर्त्तः च । प्रादुः इति जन्मवाचि अव्ययम् ॥१२३॥

**जीवातुर्जीविते**

जीव्यते अत्रेति जीवातुः । पुंक्लीबलिङ्गः "जीवेरातुः" [उ. ७८२] इत्यनेन "जीव प्राणधारणे" इत्यस्माद् 'आतुः' प्रत्ययः । जीव्यतेऽत्रेति जीवितम् प्राणाः, तत्र । जिगत्नुः, जिगम्नुः मरठः, अरुः, सन्तोऽयम्, अनुः उकारान्तोऽयम्, गयः च ।

**अथायुः पुंस्युदन्तोऽपि चायुषि ।**

एति गच्छति अनेन गत्यन्तरमित्यायुः । "कृवापाजि०" [उ. १] इति उण् । उदन्त इति उकारान्तः । एति-आगच्छति प्रतिबन्धकतां स्वकृतकर्मावाप्तनरकादिदुर्गतेर्निष्क्रमितुमनसो जन्तोः इति आयुः । "इणो णित्" [उ. ९९८] इति उस् । यद् वा, आयाति भवाद्-भवान्तरं संक्रामतां जन्तूनाम् निश्चयेनोदयमागच्छतीति आयुः, जीवितकालः तत्र । पृषोदरादित्वात् साधुः । शिङ्घानकोऽपि, तालव्यादिरयम् ।

**सङ्कल्पे स्याद् विकल्पोऽपि**

संकल्पनम् सङ्कल्पः, मनसो व्यापारः, तत्र । विकल्पनम् विकल्पः ।

**मनोऽनिन्द्रियमपि**

मन्यते जानाति अर्थात् मनः । "अस्" [उ.९५२] इति अस् । यदाह[1]—तर्के "सर्वार्थग्रहणं मनः" इति । न विद्यते इन्द्रियं अस्य अनिन्द्रियम् । स्पृशानः, संस्पृशानः, स्तिभिः, जिगम्नुः, गान्त्रम्[2], वीकः, कन्तुः, मर्क्कः च ।

अथ ॥१२४॥

**शर्म सौख्यम्**

"शृश् हिंसायाम्" शृणाति दुःखमिति शर्मम् । पुंक्लीबः । "अर्तिरीस्तुसुहुसृघृधृशृ०" [उ.३३८] इति मः । सरति दुःखम् याति अनेन सर्ममपि, दन्त्यादिः । सुखमेव सौख्यम् । भेषजादित्वाद् ष्यण् । स्योनम्[3] प्रतीकः, नन्दयन्तः, मृडीकम्, गेष्णम् च ।[4] "शो तनूकरणे" श्यति दुःखम्—शातम् तालव्यादिरिति **क्षीरस्वामी**[4] ।

**पीडा बाधः**

पीडनम् पीडा । "भीषिभूषि०" [५।३।१०९] इति बहुवचनाद् अङ् । "बाधृङ् रोटने" रोटनम् प्रतिघातः । बाध्यतेऽनेन बाधः । घञ् । वधिः, तृप्रम्, द्रप्रम्, क्रूरः च ।

**चर्चा चर्चोऽपि कथ्यते ।**

"चर्चण् अध्ययने" चर्चनम् चर्चा । "भीषिभूषि०" [५।३।१०९] इति अङ् । चर्च्यते चर्चः ।

**विप्रतीसारोऽनुशये**

वैपरीत्येन प्रतिसरणम् विप्रतिसारः । एकदेशस्य विकृतत्वात् विप्रतीसारः । "घञ्युपसर्गस्य बहुलम्" [३।२।८६] इति वा दीर्घः । अनुशयनम् अनुशयः पश्चात्तापः तत्र ।

**अथार्था अपीन्द्रियार्थवत् ॥१२५॥**

अर्थ्यन्ते—विचार्यन्ते अर्थाः । इन्द्रियैरर्थ्यन्ते इन्द्रियार्थाः । वदर्थः पूर्ववदवसेयः । गोचरनाम्नी ॥१२५॥

**सुशीमस्तु सुषीमोऽपि**

१. जे. ज. प्रतौ 'यदाह' नास्ति । २. जे. गात्रम् । ३. जे. ज. स्पोनम् । ४. ४. प्रा. प्रतौ-'शो तनूकरणे' श्यति दुःखम् शातम् तालव्यादिरिति क्षीरस्वामी' इति पाठो नोपलभ्यते ।

"श्यैङ् गतौ" सुष्ठु श्यायते सुशीमः, तालव्यमध्यः । "रुक्मग्रीष्म०" [उ.३४६] इति मान्तो निपात्यते । शोभना सीमाऽस्य सुषीमः । पृषोदरादित्वात् सस्य षत्वम् । मूर्धन्यमध्यः । शीतलनाम्नी । शतेरोऽपि ।

**कक्खटः खक्खटोऽपि च ।**

**जरठो जरुटः**

"कक्ख हसने" कक्ख्यते कक्खटः । "दिव्यवि०" [उ.१४२] इति अटः । केचिदेनं धातुं द्वितीयादिं मन्यन्ते, तन्मते खक्ख्यते खक्खटः । "दिव्यवि०" [उ.१४२] इति अटः । "जॄष् च जरसि" जीर्यते जरठः । "मृजॄशॄकम्यमिरमिरपिभ्योऽठः" [उ.१६७] इति अठः । गजदृवभृभ्यः उट उडश्च" [उ.१५३] इति उटे जरुटः । कठिननामानि ।

**अम्लेऽम्लः**

"अम गतौ" अम्यते अम्लः । "अबुङ् शब्दे" अम्बते अम्ब्लः, रसविशेषः । उभयत्र "शामाश्याशक्यम्ब्यमिभ्यो लः" [उ.४६२] इति लः ।

**रावो रव इव स्मृतः ॥१२६॥**

"रुंङ् शब्दे" रवणम् रूयते अनेन वा रावः । बहुलाधिकाराद् दीर्घः । रवणम् रवः । "युवर्ण०" [५।३।२८] इति अल् । इवो वदर्थवाचकः । क्षवोऽपि ॥१२६॥

**निषादो निषधः**

निषीदन्ति स्वरा अत्र निषादः, सप्तमः स्वरः । बाहुलकात् सोपसर्गादपि णः । यदाह—

निषीदन्ति स्वरा अस्मिन् निषादस्तेन हेतुना ।

इति । यदाहुः—

षड्जं मयूरा ब्रुवते गाव ऋषभभाषिणः ।
अजा वदति गान्धारं, क्रौञ्चः क्वणति मध्यमम् ।
पुष्पसाधारणे काले पिकः कूजति पञ्चमम् ।
धैवतं हेषते वाजी निषादं बृंहते गजः ।

"षोंच् अन्तकर्मणि" निष्यति निषधः । "नेः स्यतेरधक्" [उ.२५२] इति अधक् ।

**गञ्जो गञ्जा**

"गर्ज अव्यक्ते[1] शब्दे" गर्जनम् गर्जः। अल्। "भीषिभूषि०" [५।३। १०९] इति बहुवचनाद् अङि प्रत्यये गर्जा। हस्तिध्वनिनाम्नी।

मद्रोऽपि मन्द्रवत्।

"मदैच् हर्षे" माद्यति मध्यताराभ्यां मद्रः। "भीवृधिरुधि०" [उ.३८७] इति रः। "मदुङ् स्तुत्यादिषु" मन्द्यते मध्यताराभ्यां मन्द्रः, गम्भीरस्वरः "भीवृधि०" [उ.३८७] इत्यादिना रः। वदर्थः पूर्ववद् भावनीयः।

**आकरो निकरे**

आकीर्यते आकरः। अल्। निकीर्यते निकरः समूहस्तत्र। मुर्मुरः, शिर्शिरः, समिथम् च।

**युग्मे जकुटः**

"युजिच् समाधौ" युज्यते युग्मम्। "तिजियुजेर्ग् च" [उ.३४५] इति किद् मः, धातोर्जस्य च गत्वम्। जायते जकुटः। 'नर्कुटकुक्कुटो०' [उ.१५५] इति उटे निपात्यते। पुंलिङ्गः। यदाह **गौडः**—

वार्ताककुसुमे क्लीबं जकुटो यमले शुनि।

द्वन्द्वमपि।

अथ कनीयसि ॥१२७॥

**कनिष्ठम्**

अतिशयेन अल्पम् कनीयः, कनिष्ठम्। "गुणाङ्गाद् वेष्ठेयसू" [७।३।९] इति 'इयसु' प्रत्ययः, 'इष्ठ' प्रत्ययश्च। "अल्पयूनोः कन् वा" [७।४।२३] इति अल्पशब्दस्य 'कन्' आदेशः। अत्यल्पनाम्नी।

**विग्रहः शब्दप्रपञ्चे**

विग्रहणम् विगृह्यते वा विग्रहः। अल् प्रत्ययः। शब्दस्य प्रपञ्चः—विस्तरः शब्दप्रपञ्चः तत्र।

**निखिले पुनः।**

**स्यान्निःशेषमनूनं च**

निवृत्तम् खिलात्—शून्यात् निखिलम् समस्तम्, तत्र। निवृत्तः शेषान्निसर्गतः शेषोऽस्य वा निश्शेषम्। नास्ति ऊनमस्य अनूनम्।

---

१. जे. ज. 'अव्यक्ते' नास्ति।

खण्डलं चापि खण्डवत् ॥१२८॥

खण्डम् लाति खण्डलम्, खण्डम् अस्त्यस्य वा । सिध्मादित्वात् लः । खण्ड्यते वा । "मुरलोरल०" [उ.४७४] इति अले निपात्यते । खण्ड्यते खण्डः । पुंक्लीबलिङ्गः । वदर्थः पूर्ववद् भावनीयः ॥१२८॥

मलीमसे कल्मषं च

मलोऽस्त्यस्य मलीमसम्, मलिनम् । "मलाद् ईमसश्च" [ ७ । २ । १४ ] इति ईमसः प्रत्ययः । तत्र । "कलि शब्दसंख्यानयोः" कलते कल्मषम् । "कलेर्मषः" [उ. ५६२ ] इति मषः ।

निकृष्टे याव्यरेपसी ।

निकृष्यते निकृष्टम्–अधमम्, तत्र । याप्यते निर्गुणत्वात् याप्यम् । "जपादीनां पो वः" [ २ । ३ । १०५ ] इति पस्य वत्वे याव्यम् । अन्तस्थीयादिः । "रीङ् गतिरेषणयोः" रीयते रेपः । "रीवृभ्यां पस्" [उ. ९८१ ] इति पस् । सकारान्तोऽयम् ।

लडहं रमणीयं च रम्ये

"ललण् ईप्सायाम्" ललयति ललहः । डलयोरैक्ये लडहः । "कृपृकटिपटिमटि०" [ उ. ५८९ ] इत्यादिना अटः । यदाह गौडः–

"मनोज्ञं मञ्जु मञ्जुलं लडहं रमणीयं च ।" इत्यादि ।

रम्यते तेन रमणीयम् । "तव्याऽनीयौ" [ ५ । १ । २७ ] इति अनीयः । रमयते मनो रम्यम्–मनोहरम्, तत्र । "भव्यगेयजन्यरम्य०" [ ५ । १ । ७ ] इति साधुः । हर्यतः, दशीकम् रुम्रः, धुवकः, कमरः, उशिक्, भिलमम्, शौभुशुभः, कुमुलः, शोभुशुभश्च ।

नित्ये सदातनम् ॥१२९॥

शाश्वतिकं च

नित्यम् भवं नित्यम् । "नेर्ध्रुवे" [६।३।१७] इति त्यब्, तत्र । सदा भवं सदातनम् । "सायंचिरं०" [६।३।८८] इति तनट् । शश्वद् भवं शाश्वतिकम् । "वर्षाकालेभ्यः [६।३।८०] इति इकण् ।

नेदीय इत्यन्तिकतमे स्मृतम् ।

अतिशयेन अन्तिकम् नेदीयः । "बाढान्तिकयोः साध-नेदौ" [७।४।३७] इति

अन्तिकस्य नेद इत्यादेशः, ततो "गुणाङ्गाद्वेष्ठेयसू" [७।३।९] इति 'इयसु' प्रत्ययः। अतिशयेन अन्तिकं अन्तिकतमम्, तत्र। "प्रकृष्टे०" [७।३।५] इति तमप्।

**एकाकिन्यवगणोऽपि**

एक एव एकाकी, असहाय इत्यर्थः। तत्र। "एकादाकिन् चासहाये" [७।३।२७] इति साधुः। अवगतो गणो अस्य अवगणः। यद् **भागुरिः**—

"एकाकी स्यादवगणः"।

**प्रागप्यादौ प्रकीर्तितम्** ॥१३०॥

प्राञ्चति प्राक्। नलोपः। प्राञ्चौ प्राञ्चः। आदीयते प्रथमतया इति आदिः। पुंलिङ्गः। "उपसर्गाद् दः किः" [५।३।८७] इति किः तत्र॥ १३०॥

**मध्यमे मध्यन्दिनं च**

मध्ये जातं मध्यमम्। "मध्यात् मः" [६।३।७६] इति मः। मध्ये भवं मध्यन्दिनम्। "मध्याद दिनण्—ण-ईया मोऽन्तश्च" [६।३।१२६] इति दिनण् प्रत्ययः, 'म'आगमश्च, मतान्तरेण वृद्धयभावः। पक्षे माध्यन्दिनम्।

**निरर्गलमनर्गले।**

निर्गता अर्गला अस्य निरर्गलम्। नास्ति अर्गलाऽस्य अनर्गलम्। तत्र।

**वहुरूपपृथग्रूपनानाविधाः पृथग्विधे** ॥१३१॥

वहु रूपम् अस्य वहुरूपः। पृथक् रूपम् अस्य पृथग्रूपः। नाना-अनेकः विधः प्रकारोऽस्य नानाविधः। पृथग्विधोऽस्य पृथग्विधः तत्र॥१३१॥

**झम्पा झम्पोऽपि**

"झमू अदने" झमति झम्पा। "पम्पाशिल्पादयः" [उ. ३००] इति पान्तो निपात्यते। स्त्रीलिङ्गोऽयम्। पुंसि **अन्ये**। **यदाह** – 'झम्पः सम्पातपाटवम्' [ ] इति।

**अथ छन्ने छादिताऽपिहिते अपि।**

छाद्यते स्म छन्नम्, तस्मिन् छन्ने। छाद्यते स्म छादितम्। उभावपि "णौ दान्तशान्त०" [४।४।७४] इति विकल्पेन क्ते निपात्येते, निपातनाच्च इडभावे छन्नम्, पक्षे छादितम् इति। "डुधांगक् धारणे" अपिधीयते स्म अपिहितम्। "धागः" [४।४।१५] इति तादौ प्रत्यये परे 'हिः' आदेशः। "वाऽवाऽप्योस्तनि०" [३।२।१५६] इति विकल्पेन 'पि' आदेशे। पिहितम् इति तु **अभिधानचिन्तामणौ** उक्तमेव।

**प्रकाशिते प्रादुष्कृतम्**

प्रकाश्यते स्म प्रकाशितम्, तत्र। प्रादुष्क्रियते स्म प्रादुष्कृतम्। "निर्दुर्बहिराविः०" [२।३।९] इति षत्वम्।

अवज्ञायामसूक्षणम् ॥१३२॥

**बुधैरवमाननावगणने अपि कीर्तिते।**

अवज्ञानम् अवज्ञा, तस्याम्। "उक्ष सेचने" न सुष्ठु उक्षणम् अस्य असूक्षणम्। अवमाननम् अवमानना। अवगणनम् अवगणना। "णि-वेत्त्यासश्रन्थग्रन्थघट्टवन्देरनः" [५।३।१११] इति अनः।

**अन्दोलनमपि प्रेङ्खा**

अन्दोल्यते अन्दोलनम्। अनट्। प्रेङ्खणम् प्रेङ्खा। "इखु गतौ" अल् प्रत्ययः।

**अथोदस्तमप्युदञ्चितम् ॥१३३॥**

उदस्यते स्म उदस्तम्। उदञ्च्यते स्म उदञ्चितम्। ऊर्ध्वक्षिप्तम् ॥१३३॥

**भिदा भित्**

भेदनम् भिदा। "भिदादयः" [५।३।१०८] इति अङ्। भेदनम् भित्। "क्रुत्सम्पदा०" [५।३।११४] इति क्विप्। भिदिरः, भेदः, दल्लः, भेदनम् च।

**चोदितमपीरिते**

"चुदण् सञ्चोदने" सञ्चोदनम् नोदनमित्यर्थः। चोद्यते स्म चोदितम्। "ईरण् क्षेपणे" ईर्यते स्म ईरितम्, क्षिप्तम् तत्र।

**ऽथाऽङ्गीकृते पुनः।**

**कक्षीकृतं स्वीकृतं च**

अनङ्गम् अङ्गं क्रियते स्म अङ्गीकृतम्, तत्र। अकक्षा कक्षा क्रियते स्म कक्षीकृतम्। अस्वम् स्वम् क्रियते स्म स्वीकृतम्।

**छिन्ने छातमपि स्मृतम् ॥१३४॥**

छिद्यते स्म छिन्नम्, तत्र। "छोंच् छेदने" छायते छातम्। "छाशोर्वा" [४।४।१२] इति क्ते साधुः ॥१३४॥

**प्राप्ते विन्नम्**

प्राप्यते स्म प्राप्तम्, तत्र। "विद्लृंत् लाभे" विद्यते स्म विन्नम्।

**विस्मृतं च भवेत् प्रस्मृतमित्यपि।**

विस्मर्यते स्म विस्मृतम्, विगतम् स्मृतमत्र वा। प्रस्मर्यते स्म प्रस्मृतम्, प्रगतं स्मृतम्-स्मरणम् अत्रेति वा।

**अटाटाऽट्या पर्यटनम्**

कुटिलम् अटनम् अटाटा । "शंसि-प्रत्ययात्" [५।३।१०५] इति अः । अटनम् अट्या । "आस्यटि०" [५।३।९७] इति क्यप् । यद् मनुः—

"तीर्थत्रिकं वृथाऽट्या च कामजो देशको गुणः" । इति ।

पर्यट्यते पर्यटनम् । अनट् ।

**आनुपूर्व्यमनुक्रमे ॥१३५॥**

अनुपूर्वस्य भावः आनुपूर्व्यम् । "वर्णदृढादिभ्यष्ट्यण् च वा" [७।१।५९] इति ट्यण् । अनुक्रमणम् अनुक्रमः, तत्र ॥१३५॥

**परीरम्भोऽपि संश्लेषे स्यात्**

"रभि राभस्ये" परिरम्भणम् परीरम्भः । "घञ्युपसर्गस्य०" [३।२।८६] इति दीर्घत्वम् । संश्लेषणम् संश्लेषः, आलिङ्गनम् तत्र ।

**उद्घातोऽप्युपक्रमे ।**

उद्घननम् उद्घातः । घञ् प्रत्ययः । "ञ्णिति घात्" [४।३।१००] इति हन्तेर्घात् इत्ययमादेशः । उपक्रमणम् उपक्रमः, आरम्भस्तत्र ।

**जातौ जातमपि**

जायतेऽस्यां जातिः, तत्र[1] । जायतेऽस्मिन् जननम् वा जातम् ।

**स्पर्द्धा सङ्घर्षोऽपि**

"स्पर्द्धि सङ्घर्षे" सङ्घर्षः, पराभिभवेच्छा । स्पर्द्धनम् स्पर्द्धा । "क्तेटो०" [५।३।१०६] इति अः । "घृषू सङ्घर्षे" सङ्घर्षणम् सङ्घर्षः ।

**अथ विक्रिया ॥१३६॥**

**विकारो विकृतिश्चापि**

विक्रियते विक्रिया । "कृगः श च वा" [५।३।१००] इति श प्रत्ययः । विकरणम् विकारः । विक्रियते विकृतिः । "स्त्रियां क्तिः" [५।३।९१] इति क्तिः ।

**विलम्भस्तु समर्पणम् ।**

"डुलभिष् प्राप्तौ" विलम्भनम् विलम्भः । घञ् प्रत्ययः । "उपसर्गात् खल्-घञोश्च" [४।४।१०७] इति नोऽन्तः । समर्प्यते समर्पणम् ।

---

१ जे. 'तत्र' नास्ति ।

**दिष्ट्या समुपजोषम्**

दिशति दिष्ट्या "वृमिथिदिशिभ्यः०" [उ. ६०१] इति ष्ट्यादिः 'आ' प्रत्ययः । **यथा**—दिष्ट्या ते पुत्रो जातः । "जुषी प्रीतिसेवनयोः" समुपजुष्यते समुपजोषम् । बाहुलकाद् अम् । **यदाह**—दिष्ट्या समुपजोषं च सानन्दे । **यथा**—समुपजोषं वर्तते । उपजोषमपि ।

**सर्वदा सदा सनत् सनात् ॥१३७॥**

सर्वस्मिन् काले सर्वदा । "किम्यत्तत्सर्वैकान्यात् काले दा" [७।२।९५] इति दा प्रत्ययः । सदा, अधुना, इदानीम्, तदानीम्, एतर्हीति सर्वशब्दाद् दा प्रत्ययः 'स'भावश्चास्य । "षणूयी दाने" सनोति सनत् सनात् । उभावपि "संश्चद्वेहत्साक्षादादयः" [उ. ८८२] इति कत् प्रत्ययान्तौ निपात्येते । **यथा**—सनत्कुमारः, सनात्कुमारः, सदमपि ॥१३६॥

**निर्भरे च स्वती**

निःशेषेण भरोऽत्र निर्भरम्—भृशम्, तत्र । सुनोतेः क्विपि, नागमाभावे सु । यद् वा "शुभि दीप्तौ" "शुभेः स च वा" [उ. ७४३] इति डित्युकारे सादेशे च सु । **यथा**—सुगुप्तम्, सुषिक्तम् । अततेः "पदिपठि०" [उ. ६०७] इति इ प्रत्यये अति । **यथा**—अतिक्रतम्, अतीसारः, अतिवृष्टिः इति ।

**हेतौ येन तेन च कीर्तितौ ।**

हिनोति वर्द्धते हेतुः । पुंलिङ्गः । तत्र । हेतौ कारणे "कृसिकमि०" [उ. ७७३] इति तुन् । येन तेन इत्येतौ विभक्त्यन्तप्रतिरूपकौ निपातौ । **यथा**—"येन दाता तेन श्लाघ्यः" इत्यादि । कीर्तितौ—कथितौ इत्यर्थः ।

**अहो सम्बोधने ऽपि**

नञ्पूर्वात् जुहोतेर्विचि, अहो । **यथा**—'अहो देवदत्त' इत्यादि सम्बोधने सम्बोधनार्थे ।

**इति षष्ठः काण्डः शिलोञ्छितः ॥१३८॥**

इति अमुना प्रकारेण षष्ठः—षण्णाम् संख्यापूरणः काण्डः श्रीहैमनाममाला-शिलोञ्छस्य अधिकारः शिलोञ्छितः—शिलोञ्छो जातोऽस्येति शिलोञ्छितः, शिलोञ्छी-कृत इत्यर्थः । तारकादित्वाद् इतः ॥१३८॥

साम्प्रतं ग्रन्थकृत्स्वनामादिनिवेदिकां ग्रन्थसमाप्तिं प्रतिपादयन्नाह—

**वैक्रमेऽब्दे त्रिविश्वेन्द्रमिते राधाद्यपक्षतौ।**
**ग्रन्थोऽयं दृदभे श्रीमज्जिनदेवमुनीश्वरैः ॥१३९॥**

श्रीर्विद्यते येषां ते श्रीमन्तः, ते च ते जिनदेवाश्च श्रीमज्जिनदेवाः, मुनीनाम् ईश्वराः-अधिपतयो मुनीश्वराः । यद् वा, मुनिषु साधुषु ईशते—परमैश्वर्यं सूरिपदलक्षणं भजन्तीत्येवंशीला मुनीश्वराः, सूरय इत्यर्थः । "स्थेशभसपिस-कसो वरः" [५।२।८१] इति वरः । श्रीमज्जिनदेवाश्च ते मुनीश्वराश्च श्रीमज्जिनदेवमुनीश्वरास्तैः **श्रीमज्जिनदेवमुनीश्वरैः** । श्रीमद्वृद्धेतरखरतरगच्छाल-ङ्कारोदारहार**श्रीजिनप्रभसूरि**शरण्यवरेण्यचरणसरसीरुहचञ्चरीकप्रकरैरयं प्रत्यक्षो-पलभ्यमानो ग्रन्थः—शास्त्रम् दृदभे—सन्दब्ध इत्यर्थः । कस्मिन् वर्षे ? इत्याह— विक्रमस्य—विक्रमादित्यनृपतेरयं वैक्रमः । "तस्येदम्" [६।३।१६०] इति अण् । तस्मिन् वैक्रमे[1] विक्रमादित्यनृपतिसम्बन्धिनि अब्दे—संवत्सरे । किम्भूते ? 'त्रिविश्वेन्द्रमिते' "अङ्कानाम् वक्रतो गतिः" इति वचनप्रामाण्यात्, इन्द्र-शब्देन चतुर्दशसंख्यायाः संज्ञा । यदुक्तम्—"शक्रैर्गुरुः सप्त कुभिश्च मन्दः" । इत्यत्र शक्रैरिति चतुर्दशभिरित्यर्थः । विश्वशब्देन भुवनम, भुवनशब्देन त्रीणि । पुनरपि त्रीणि । ततश्च द्वन्द्वे त्रिविश्वेन्द्रास्तैर्मितः—प्रमितः त्रिविश्वेन्द्रमितस्तस्मिन् त्रिविश्वेन्द्रमिते १४३३ वर्षे । पुनः कस्याम ? 'राधाद्यपक्षतौ' राधः वैशाख-स्तस्य आद्यपक्षतिः—कृष्णप्रतिपत् तस्यां राधाद्यपक्षतौ ग्रन्थोऽयं विरचित इत्यर्थः ॥१३९॥

इति श्रीमद्बृहत्खरतरगच्छीय-श्रीजयसागरमहोपाध्यायसन्तानीय-
वाचनाचार्यश्रीभानुमेरुगणिशिष्यमुख्यश्रीज्ञानविमलोपा-
ध्यायविनेयवाचनाचार्यश्रीवल्लभगणिविरचितायां
**श्रीहैमनाममालाशिलोञ्छटीकायां** साधारण-
काण्डस्य **शिलोञ्छः** समाप्तः ।
तत्समाप्तौ समाप्ता चेयं श्री हैमनाम-
मालाशिलोञ्छटीका ।छ। श्रीः ॥

---

१. जे. 'वैक्रमे' नास्ति ।

## [ टीकाकारकृता प्रशस्तिः ]

श्रीमत्खरतरगच्छे चक्रे यैः सन्नवाङ्गवरवृत्तिः ।
श्रीमन्तोऽभयदेवाचार्या ज्यायां विरेजुस्ते ॥१॥

तत्पट्टे जिनवल्लभसूरिवराः सर्वशास्त्रपारीणाः ।
तेषां शिष्या आसन् श्रीमज्जिनदत्तसूरीन्द्राः ॥२॥ युग्मम्[1] ।

विख्यातयशसस्तेषां पट्टक्रमेण सूरयः ।
श्रीमच्छ्रीजिनमाणिक्याचार्याः क्ष्मायां विरेजिरे ॥३॥

अकब्बराख्यक्षितिपालपर्षच्-चञ्चत्प्रमाणोक्तिसुलब्धशोभाः ।
लोकत्रयीव्याप्तयशोवितानाः राजन्ति ये साधुयुगप्रधानाः ॥४॥

श्रीधर्मराज्यं परिपालयत्सु दुर्वादिदर्पं च निवारयत्सु ।
तत्पट्टपूर्वाचलसप्तसप्तिषु तेषूदितश्रीजिनचन्द्रसूरिषु ॥५॥
त्रिभिर्विशेषकम् ।

अकब्बराख्यक्षितिभृत्समक्षं येन प्रपेदे पदमुत्तमं महत् ।
गुरोः कराच्छ्रीजिनचन्द्रनाम्नो विराजति श्रीजिनसिंहसूरौ ॥६॥

शुशुभिरे जिनराजमुनीश्वराः खरतराह्वगणाभ्रदिवाकराः ।
तदनु भूरिगुणा जयसागरा जगति रेजुरनुत्तमपाठकाः ॥७॥

तेषां शिष्या मुख्या दक्षाः आसन् अदूष्यगुणलक्षाः ।
श्रीरत्नचन्द्रनामोपाध्यायाः साधुपरिधायाः ॥८॥

तत्पट्टस्फुटपद्मप्रकाशनोदारसूरसङ्काशाः ।
श्रीभक्तिलाभनामोपाध्यायाः शास्त्रकर्त्तारः ॥९॥

धीमन्तोऽन्तिषदस्तेषां कलाकौशलपेशलाः ।
समजायन्त राजन्तो ग्रन्थार्थाम्भोधिपारगाः ॥१०॥

चारित्रसारपाठकभावाकरसद्गणीश्वरा दक्षाः ।
श्रीचारुचन्द्रवाचकधुर्याः स्मार्या मुनीशानाम् ॥११॥

तेषां क्रमशः पट्टव्योमाङ्गणशीतरश्मिसङ्काशाः ।
श्रीभानुमेरुवाचक–जीवकलश–कनककलशाङ्काः ॥१२॥

---

१ जे. ज. प्रतौ 'युग्मं' नास्ति ।

तत्र चारित्रसाराख्या उपाध्याया महाजयाः ।
बभूवुः श्रुतपाथोधिपारीणाः साधुवृत्तयः ॥१३॥

तत्पट्टे समभूवन् विलसत्संवेगरङ्गसंलीनाः ।
वाचकपदप्रधानाः श्रीमन्तो भानुमेर्वाह्वाः ॥१४॥

सौभाग्यौघं निविडजडतां व्यञ्जयन्त्यन्तयन्ती,
यद्वक्त्राम्भोरुहसुवसतिं प्राप्य गौर्ललसीति ।
गम्भीरा ये बृहदुदधयः स्फूर्त्तिमन्तो महान्तो,
गाम्भीर्यादिप्रथितसुगुणैर्वर्ण्यलावण्यपुण्याः ॥१५॥[1]

जयन्ति [ये] क्ष्मायां समयकथितज्ञानविमला-
श्चिरं चञ्चत्पाठकपदवरा ज्ञानविमलाः ।
लसत्तत्पट्टे [सद्]वचनरचनारञ्जितजना
महावादिव्राजप्रमितिकथनादाप्तविजयाः ॥१६॥

युग्मम् ।

वैराग्यरससंलीनास्तद्गुरुभ्रातरोऽधुना ।
विजयन्ते महान्तः श्रीतेजोरङ्गगणीश्वराः ॥१७॥

तेषां जयन्ति जयिनः सुनया विनेयाः
सद्भागधेयमतिमत्प्रतिवाधजेयाः ।
श्रीज्ञानसुन्दरसुधी-जयवल्लभाद्या
वाग्देवताप्रतिमसत्प्रतिभाप्रधानाः ॥१८॥

श्रीज्ञानविमलपाठकसत्पादाम्भोजचञ्चरीकेण ।
श्रीवल्लभेन रचिता[2] शिलोञ्छशास्त्रे शुभा टीका ॥१९॥

हैमव्याकृति-हैमोणादिग्रन्थादि-नामकोशांश्च ।
दृष्ट्वा विमृश्य बाढं प्रसादमासाद्य पूज्यानाम् ॥२०॥

वेदेन्द्रियरसपृथ्वीसंख्ये वर्षे सुनागपुरनगरे ।
मधुमासाद्ये पक्षे मूलार्के सप्तमीतिथ्याम् ॥२१॥

त्रिभिर्विशेषकम्

---

१. प्रा. गाम्भीर्यस्थैर्यगुणप्रमुखैर्वर्ण्यलावण्यपुण्याः । जे० गाम्भीर्यादिप्रविततसुगुणैर्वर्ण्यलावण्यपुण्याः । २. प्रा. विदधे ।

शिलोञ्छाभिधसन्नामकोशे वृत्तिं वितन्वता ।
मयाऽलीकमिह प्रोक्तं यत् किञ्चिद् बुद्धिमान्द्यतः ॥२२॥

मयि प्रसादमाधाय शोधनीयं तदुत्तमैः ।
कर्त्तव्या तत्र नोपेक्षा विद्वद्भिर्विशदाशयैः ॥२३॥

युग्मम् ।

यतः —

गच्छतः स्खलनं क्वापि प्रमादादेव जायते ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥२४॥

अर्वाचीनविचक्षणविनिर्मितां व्याकृतिं विमृश्येति ।
नोपेक्षां कुरुत बुधा ग्रन्थान् संवीक्ष्य यद्दब्धान् ॥२५॥

श्रीपार्श्वनाथदेवश्रीजिनदत्त-जिनकुशलसूरीणाम् ।
सौम्यदृशाऽधीयानानां स्यादेषेह सद्बुद्ध्यै ॥२६॥

यावद् वार्द्धि-मही-मेरु-तारा-तारेश-भास्कराः ।
जयन्त्येते शिलोञ्छस्य तावन्नन्दतु दीपिका ॥२७॥

त्रयोदशशतान्येवं ग्रन्थमानं विनिश्चितम् ।
अस्याः शिलोञ्छटीकाया अनुमित्या कृतं शुभम् ॥२८॥

। इति प्रशस्तिः समाप्ता ।

ग्रन्थाग्रम् ॥१३००॥ श्रीरस्तु ॥ श्रीः ॥ श्रीः ॥

## परिशिष्ट १

## हैमनाममालाशिलोच्छान्तर्गतशब्दानां दीपिकाकारोद्धृत-पर्यायरूपशब्दानाञ्च अकाराद्यनुक्रमः

['टी.' शब्दाङ्किताः शब्दाः दीपिकाकारेणोद्धृताः सन्ति ।

क्ष

# परिशिष्ट २

## हैमनाममालाशिलोञ्छदीपिकायां दीपिकाकारेण श्रीश्रीवल्लभोपाध्यायेनोद्धृतानामवतरणश्लोकादीनामकाराद्यनुक्रमः।

---

## परिशिष्ट ३.

# हैमनाममालाशिलोञ्छदीपिकान्तर्निर्दिष्टानां ग्रन्थानां ग्रन्थकर्तॄणां विशिष्टनाम्नाञ्चाकाराद्यनुक्रमः

## परिशिष्ट-४

# मूलग्रन्थस्य पाठभेदाः

१-३. पु.अ. आ. श्रीहैमनाममालायाः । १-४. अ. शलोञ्छः । २-२. अ. सम्भवे शम्भवेऽपि च । ३-४. आ. युगादिजिनमातरम् । ४-२ अ. अजितारिः । पु. आ. 'च' नास्ति । ४-४. अ. सुतारिकोक्ता । ५-१. पु. अ. आ. भद्रकृद्भिद्रकरोऽपि । ५-२. आ. श्रमणोऽपि । ५-३. पु. भद्रं भन्दमपि, अ. भद्रं भद्रमपि, आ. भन्द्रं मन्दमपि । ७-३. पु. समुद्रं नवनीतं । ८-३. अ. घोतस् । पु. आ. पृष्णिमृष्णी, अ. पृष्णिमुष्णो । ९-४. पु. आ. इन्वका, अ. इंविका ।

११-३. अ. तुंग्यौ । १२-१. अ. स्यादन्धतमसं । १२-३. अ. सांसृष्टक० । १२-४ अ. तात्कालजे । १३-२. आ. वार्द्दिलं । अ. दुर्दिने० । १४-२. अ. घनाधिपे । १४-३. आ. अजगवमजागावमपि । १४-४. पु. अ. आ. शङ्करधन्विनि । १५-४. पु. आ. ईः । १६-३. आ. व्याख्याव्यवाहाभ्यां । १७-१. पु. दृष्टिः पातो । १७-१. पु. अ. आ. द्वादशाङ्ग्यां । १७-३. अ. जुगुप्साऽध्या० । १८-२. अ. रुशतीद्रुशत्यपि । १८-३. पु. सन्धीयां । १९-१. पु. अ. आ. सूका । १९-१. पु. अ. आ. मन्दाक्षञ्च । २०-१.२. पु. केलीकिकिलोऽपि ।

२१-१. पु. आ. यौवनिको । २२-४. पु. अ. आ. ०ऽन्धजडशठेष्वप्यनेडमूकस्तु । २३-१. अ. वदन्यौ । २३-२. अ. दानशैल० । २३-३. अ. मूर्षि । २३-३. अ. ऽपीभ्ये । २४-१. पु. आ. ०वैवधिकावपि । २४-२. अ. आ. सम्मार्जके । २४-३. पु. अ. बहुकरो । २४-४. पु. अ. आ. इतीष्यते च परैः । २५-१.२. अ. विहङ्गिमाप्यथोर्ध्वदेहिके । २५-३. पु. अ. और्ध्वदेहिकं, आ. ऊर्ध्वदैहिकं । २५-४. अ.० रनृजो । २५-४. पु. आ. शठ । २७-१. अ. प्रदेशनमपि । २७-३. आ. 'कोपनः' नास्ति । २७-३. पु. तृणक् । २८-२. पु. अ. आ. मर्ज्जिताऽपि च मार्ज्जिता । २९-२. पु. अ. पिच्छले । २९-४. पु. आ. जेमनं । ३०-१. अ. तृप्तौ । ३०-२. पु. पिशिताशनि । ३०-३. पु. आ. मनोराज्यामनोगव्या. ।

३२-१. अ. पूजिते । ३२-४. अ. ऽप्येन्द्रलुप्तके, आ. ऽप्येन्द्रलुप्तिके । ३३-१ पु. आ. कद्दरो । ३३-३. ४. अ. खर्जूतिर्विस्फोटो । ३४-३. पु. मोहप्रमोहवदायु० । ३५-४. आ. परिषद्योऽपि । ३६-१. पु. स्युर्नैमित्तकनैमित्त० । ३६-४. आ. कुलिकोऽपि । ३७-४. पु. प्रभुविष्णुरपि । ३८-१. पु. अ. आ. जंघाकरोऽपि । ३८-२. आ. ऽप्यनुगामनि । ३८-३. आ. पर्येषणोपासनोऽपि । ३९-१. पु.

आतिथ्यौ० । ३९-२. ऽभियो । ३९-३. आ. श्री । ४०-१. पु. अ. आ. सुवासिनी । ४०-२. पु. अ. आ. चिरण्टी । ४०-२. पु. चिरटचपि । ४०-३. पु. 'पत्न्यां' नास्ति । ४०-३. पु. कत्री, आ. कर्त्री ।

४२-३. पु. अ. आ. दिधीपू० । ४३-२, पु. श्रवणा श्रवणे, अ. श्रमणा श्रवणे । ४४-२. पु. माहने । ४४-३. अ. सगर्भोऽपि, पु. सगर्म्योऽपि । ४४-४. अ. स्यादग्रिज० । ४५-२. पु. ३२. जनत्र्यपि, आ. जनेत्र्यपि । ४५-४. पु. कर्णशब्दो ग्रहोऽपि । ४६-४. आ. कफोणवत् । ४७-१. पु. कर्प्पूरे । ४७-१. पु. आ. सिंहताळः, अ. 'सिंहतलः' नास्ति । ४७-२. पु. अ. आ. सिंहतलोऽपि । ४७-३.पु. आ. चुलुकोऽपि चुलो, अ. चलुकोऽपि चलौ । ४८-१, पु. अ. आ. 'च' नास्ति । ४८-४ पु. पृष्ठास्थीनि । ४९-३. पु. अ. आ. सिंघाणः । ५०-२. अ. वंशोऽपि । ५०-३. अ. उत्सादनोच्छादने । ५०-३.४. पु. अ. आ. च प्लवा० ।

५१-१. पु. कृमिकं जग्धं, आ. कमिजग्धं । ५१-१. २. पु. अ. आ. चागरौ । ५१-४. पु. कुङ्कुमः । ५२-३. पु. आ. मुकुटोऽपि । ५२-४. अ. विशेपकैः । ५३-१. पु. वसन्तोप्यवसतो । ५३-२. पु. अ. आ. तुवछरी । ५३-३. ४. पु. आ. मञ्जरी च पारितथ्या पर्यातथ्या तथैव च । अ. मञ्जरी च पत्रात्पारितथ्या पर्या च तथ्यया । ५४-१. पु. आ. कर्णेन्दूरपि कर्णेन्दुः । ५४-३. पु. अ. आ. किंकिणी किंकणी । ५४-४. पु. आ. अच्छादात् । ५५-१. पु. आ. कुर्प्पासो, अ. कुर्प्पासे । ५५-१. पु. 'कक्षापटे' नास्ति । ५६-४. अ. संस्तरः । ५७-१. अ. पतद्ग्राहप्रतिग्राहावपि । ५७-३. अ. ऽप्यात्मदर्शोऽथ । ५८.३. अ. गीरीयको । ५९-१. अ. गण्डकोऽपि गन्दुको । ५९-३. अ. भरथः ।

६१-४. अ. परिवकर्णमित्यपि । ६२-४. अ. निष्किके । ६४. २. पु. 'अपि' नास्ति । ६४-२. पु. शबरो, अ. शिबरे । ६४-४. अ. प्रकीर्त्यते । आ' प्रकीर्त्तिताम् । ६५-२. अ. झम्फानं । ६६-१- आ. वक्त्रं । ६६-३ पु. 'धियाङ्गं' नास्ति । ६७-३. पु. आ. धनूर्धनुःशरा० । ६८.१. आ. खेट । ६९-१. आ. ऊर्ज्जुस्व्यू ऊर्ज्जस्वान् । ६९-१. अ. मगधो । ६९-२. अ. विधिकरो । ६९-३. ४. अ. सौख्यशय्यिकौ । ६९-४. पु. अ. आ. सौखसुप्तिके । ७०-१. प्र. आ. संस्फोटसंफेटौ । ७०-२. पु. आ. बलि । ७०-२. पु. आ. द्रविणमूक् ।

७१-२. अ. तपस्यपि । ७१-३. ४. पु. चाग्नीध्राग्नीनाधीप्यथ, आ.

चाग्नीध्राग्नीधाप्यथ, अ. चाग्नीधा ग्नीध्रप्यथ । ७२.२. पु. अ.आ. दधिषाज्यं । ७२–३. पु. आ. अग्निहोत्र्यग्न्याहितो, अ. ह्यग्निहोत्र्यग्न्याहितो । ७३–१.पु. अ. आ. उपवस्त्रमौपवस्त्र० । ७४–१. पु. मैत्रावरुण्यादि०, अ. मैत्र्यावरुण्यादि । ७४-३. अ. योगेशो । ७४–३. अ. याज्ञवल्को । ७५–४. पु. आ. चाणाक्य. ७६–१. पु.। पु. वैशेषिको । ७६–३. पु. अ. आ. लौकायतिकः । ७७–३ पु.आ. अयुते नियुतं, अ. आयुते नियतं । ७७–३. आ. पाते । ७८–१. अ. कर्णो पारित्रे । ७८–२. आ. गवेश्वरोऽपि । ७९–३. पु. अ. आ. तन्त्रवायोऽपि । ७९–४. पु.अ. आ. व्योमापि । ७९–४.पु आ. कीर्तिता । ८०–४.आ. वर्द्धिकः ।

८१–१. पु. चित्रकारो । ८१–२. अ. लेपकृत् । ८२–२. पु. आ. चाण्डालबुकसौ । ८४–४. पु. मालवे मालको । ८६–१. पु. अ. आ. सुरंगायां । ८६-३. पु. आ. उपकार्योपकार्याऽपि, अ. उपकार्यो उपकार्यापि । ८६-४. पु. प्रसादे । ८६–४. आ. प्रसादनम् । ८७-३. पु. 'अपि' नास्ति । ८७-४. अ. खडक्किका । ८८-२. पु. पटो । ८८-२. अ. सम्पुटे पुट इत्यपि । ८८-३. पु. आ. पेटकापि । ८८-४ पु. आ. मतिः । ८९-१.२. पु. आ. समूहिन्यामयोनिः, अ. समूहिन्यामयोनि । ८९-२. पु. अ. आ. मुशलं । ९०-३. पु. अ. आ. क्रोञ्चः । ९०-४. पु. अ. आ. क्रोञ्चवत् ।

९१-३. अ. शातकुम्भमपि स्वर्णे । ९२-१. पु. रजसातं । ९२-२. अ. तुक्षे । ९२-३. अ. गौक्षिके । ९३-२. अ. सुधियां । ९३-४. पु. अ. कुरविन्दे । ९३-४. पु. हिङ्गलुः, अ. हिङ्गुलः । ९४-३. अ. शोणिरत्नं । ९५-२. पु. अ. आ. कमन्धमपि ।९५-४.पु. अ. महिकाः, आ. महिका । ९७-३. चन्द्रभागी, चन्द्रभागा अ. चान्द्रभागा चन्द्रभङ्गा । ९७-४ पु. अ. गोतमीत्यपि । ९८- ३. पु.आ. उद्घातनोप्युद्घाटनं च, अ. उद्घातनोद्घाटने च । ९९-१ पु. अ. आ. तडागस् ।

१०१-१. पु. लञ्छलुम्ब्यौ,अ. आ. गुलञ्छलुम्ब्यौ । १०१- ३. पु. किङ्कराते। १०१-३. पु. कुरुण्ट, अ. कुरण्टक । १०२- ३. अ. वाशा च स्नुहिः स्नुहापि । १०३- १. पु. नार्याङ्गोपि नारङ्गोऽक्षे । अ. नार्यङ्गोपि नारङ्गोऽक्षे, आ. नार्यङ्गोऽपि च नारङ्गोऽक्षे । १०३-४. पु. अ. आ. निर्गुण्डी । १०३-४. पु. आ. संदुवारवत, अ. सुंदुवारवत् । १०४-३. पु. आ. धत्तूर इव धत्तूरो, अ. धत्तूर इव वत्तूरो । १०५-१. पु. अ. ह्रीवेरं । १०५-२. आ. पर्यायः । १०५-४. पु. सरोजनि, अ. कुमदिनी । १०६-३. आ. शेफालं च । १०७-३. कणि कनि । १०७-४. पु. धीन्ये । अ. ध्यान्ये १०८-१. अ. हालाहलं हालहलं। १०८-३. अ. क्रमिरपि । १०८-३.४. गण्डपदः । १०८-४. पु. आ. किञ्चलकोऽपि, अ. किञ्चुलकोऽपि ।

१०९-१. पु. आ. शाम्बूका अपि शम्बूका, अ. शम्बुका अपि शम्बूका। १०९-२. पु. वृश्चिको। १०९-४. पु. करः करी। ११०-१.२. पु. अ. आ. ष्याडोऽप्यौपवाह्योप्युपवाह्ये। ११०-३. पु. अ. आ. शृङ्खले। ११०-३. पु. निगलेन्दूश्च, अ. निगलोंडूश्च। ११०-४. पु. आ. कक्ष्या काक्ष्यापि, अ. कक्ष्या कक्ष्यापि।

१११-१. पु. वाल्हीकोपि वल्गा वा, अ. वाल्हीकोपि वल्गवागे, आ. वाल्हीकोपि वल्गावागः। १११-३. पु. आ. मयापुष्टे, अ. मार्योपुष्टे ११२-२ पु. अ. आ. ककुदमि०। ११३-३. अ. सैरमा। ११६-२. पु. शेषे। ११६-४. अ. निलयत्यपि। ११७-१ पु. आ. विहङ्गे। ११८-१. अ. वायते। ११८-१. पु. विलपुष्टोपि। ११८-३. पु. अ. क्रोञ्च्यां। ११८-४. पु. आ. किकी, अ. किकीः। ११९-१ किकिदीवरपि। ११९-३. अ. आ. कलिविङ्कं। ११९-३. पु. अ. आ. कुलिङ्गोपि। १२०-१ आ. दस्त्यूहो. पु. दास्त्यूहो। १२०-२. अ. बकेरू।

१२१-१. अ. वाशवतोपि। १२१-२. पु. आ. मच्छयो, अ. मत्स्यो। १२१-२. पु. तंपुणे। १२१-३. पु. वरुणपाशेपि। १२१-४. अ. नक्रः शङ्कमुखोपि। १२२-२. अ. शिलोञ्छतः, आ. शलोञ्छितः। १२४-४. अ. मनोनेन्द्रियम०। १२४. आ. प्रतौ १२४ पद्यांको नोपलभ्यते। १२५-१. पु. धर्म्मं। १२५-२. पु. अ. आ. वाधा। १२६-१. पु. अ. सुसीमस्तु। १२६-२. पु. आ. करटः। १२६-२. पु. अ. आ. कक्खटोपि। १२६-३. पु. आ. ऽम्लेऽम्नो, अ. ऽम्लेऽम्लो। १२६-४. पु. रव इति। १२७-४. आ. कनीयसम्। १२९-१ आ. कल्मं च। १२९-२. अ. याव्यंरेफसी। १३०-१. अ. नोदीय।

१३२-१. अ. झषोप्यथ। १३२.१. अ.छिन्ने। १३२-२. पु. अ. आ. छादितं। १३३-१. आ. बुद्धेर०, । अ. बुधैरवगमना०। १३३-३. पु. प्रेंखो०। १३४-१.२. पु. आ. भिच्चोदितमपि च तथाङ्गीकृते। १३५-३. पु. अटाटचाटचा, आ. अटाटचटचा। १३६-३. पु. जातो। १३७-२. अ. समर्प्पे। १३७-४. संदं सनशनात्। १३८-२. अ. कीतौ। १३८-४. अ. काण्ड। १३९-१. पु. त्रिवस्विषुमिते। अ. त्रिवस्विन्दुमिते. आ. त्रिवस्विषुतिमे। १३९-२. पु. राधा-घेपक्षतो। १३९-३. ४. पु. अ. आ. श्रीमज्जिनदेवमुनीश्वरः।

प्रान्तपुष्पिका—पु. इति हैमनाममालायाः शिलोञ्छः समाप्तः। अ. इति हैम-नाममालायाः शिलोञ्छः समर्थितः। आ. इति हैमनाममालायाः शिलोञ्छः। कृता श्रीजिनदेवसूरिभिरियं नाममाला। श्री।

## LALBHAI DALPATBHAI BHARATIYA SANSKRITI VIDYA MANDIR

### L.D. SERIES

| S. NO. | Name of Publications | Price Rs. |
|---|---|---|
| *1. | Śivāditya's Saptapadārthī, with a Commentary by Jinavardhana Sūri. Editor : Dr. J.S. Jetly. (Publication year 1963) | 4/- |
| 2. | Catalogue of Sanskrit and Prakrit Manuscripts : Munirāja Shri Puṇyavijayaji's Collection. Pt. I. Compiler : Munirāja Shri Puṇyavijayaji. Editor : Pt. Ambalal P. Shah. (1963) | 50/- |
| 3. | Vinayacandra's Kāvyaśikṣā. Editor : Dr. H.G. Shastri (1964) | 10/- |
| 4. | Haribhadrasūri's Yogaśataka, with auto-commentary, along with his Brahmasiddhāntasamuccaya. Editor : Munirāja Shri Puṇyavijayaji. (1965) | 5/- |
| 5. | Catalogue of Sanskrit and Prakrit Manuscripts, Munirāja Shri Puṇyavijayaji's Collection, pt. II. Compiler : Munirāja Shri Puṇyavijayaji. Editor : Pt. A.P. Shah. (1965) | 40/- |
| 6. | Ratnaprabhasūri's Ratnākarāvatārikā, part I. Editor : Pt. Dalsukh Malvania. (1965) | 8/- |
| *7. | Jayadeva's Gītagovinda, with king Mānāṅka's Commentary Editor : Dr. V. M. Kulkarni. (1965) | 8/- |
| 8. | Kavi Lāvaṇyasamaya's Nemiraṅgaratnākarachanda. Editor : Dr. S. Jesalpura. (1965) | 6/- |
| 9. | The Nāṭyadarpaṇa of Rāmcandra and Guṇacandra : A Critical study : By Dr. K.H. Trivedi. (1966) | 30/- |
| *10. | Ācārya Jinabhadra's Viśeṣāvaśyakabhāṣya, with Auto-commentary, pt. I. Editor : Dalsukh Malvania. (1966) | 15/- |
| 11. | Akalaṅka's Criticism of Dharmakīrti's Philosophy : A study by Dr. Nagin J. Shah. (1966) | 30/- |
| 12. | Jinamāṇikyagaṇi's Ratnākarāvatārikādyaślokaśatārthī, Editor : Pt. Bechardas J. Doshi. (1967) | 8/- |
| 13. | Ācārya Malayagiri's Śabdānuśāsana. Editor : Pt. Bechardas J. Doshi (1967) | 30/- |
| 14. | Ācārya Jinabhadra's Viśeṣāvaśyakabhāṣya, with Auto-commentary. Pt. II. Editor Pt. Dalsukh Malvania. (1968) | 20/- |
| 15. | Catalogue of Sanskrit and Prakrit Manuscripts : Munirāja Shri Puṇyavijayaji's Collection. Pt. III. Compiler : Munirāja Shri Puṇyavijayaji. Editor : Pt. A.P. Shah. (1968) | 30/- |

* out of print.

| | | |
|---|---|---|
| 16. | Ratnaprabhasūri's Ratnākarāvatārikā, pt. II. Editor : Pt. Dalsukh Malvania. (1968) | 10/- |
| 17. | Kalpalatāviveka (by an anonymous writer). Editor : Dr. Murari Lal Nagar and Pt. Harishankar Shastry. (1968) | 32/- |
| 18. | Āc. Hemacandra's Nighaṇṭuśeṣa, with a commentary of Śrīvallabhagaṇi. Editor : Munirāja Shri Punyavijayji. (1968) | 30/- |
| 19. | The Yogabindu of Ācārya Haribhadrasūri with an English Translation, Notes and Introduction by Dr. K.K. Dixit. (1968) | 10/- |
| 20. | Catalogue of Sanskrit and Prakrit Manuscripts : Shri Āc. Devasūri's Collection and Āc. Kṣāntisūri's Collection : Part IV. Compiler : Munirāja Shri Punyavijayji, Editor : Pt. A.P. Shah. (1968) | 40/- |
| 21. | Ācārya Jinabhadra's Viśeṣāvaśyakabhāṣya, with Commentary, pt. III. Editor : Pt.Dalsukh Malvania and Pt. Bechardas Doshi (1968) | 21/- |
| 22. | The Śāstravārtāsamuccaya of Ācārya Haribhadrasūri with Hindi Translation, Notes and Introduction by Dr. K.K. Dixit. (1969) | 20/- |
| 23. | Pallipāla Dhanapāla's Tilakmañjarīsāra Editor : Prof. N. M. Kansara. (1969) | 12/- |
| 24. | Ratnaprabhasūri's Ratnākarāvatārikā pt. III, Editor : Pt. Dalsukh Malvania. (1969) | 8/- |
| 25. | Āc. Haribhadra's Nemināhacariu Pt. 1 : Editors M. C. Modi and Dr. H. C. Bhayani. (1970) | 40/- |
| 26. | A Critical Study of Mahāpurāṇa of Puṣpadanta, (A Critical Study of the Deśya and Rare words from Puṣpadanta's Mahāpurāṇa and His other Apabhraṁśa works). By Dr. Smt. Ratna Shriyan. (1970) | 30/- |
| 27. | Haribhadra's Yogadṛṣṭisamuccaya with English translation, Notes, Introduction by Dr. K. K. Dixit. (1970) | 8/- |
| 28. | Dictionary of Prakrit Proper Names, Part I by Dr. M. L. Mehta and Dr. K. R. Chandra, (1970) | 32/- |
| 29. | Pramāṇavārtikabhāṣya Kārikārdhapādasūci. Compiled by Pt. Rupendrakumar. (1970) | 8/- |
| 30. | Prakrit Jaina Kathā Sāhitya by Dr. J.C. Jaina, (1971) | 10/- |
| 31. | Jaina Ontology, By Dr. K. K. Dixit (1971) | 30/- |
| 32. | The Philosophy of Sri Svaminarayan by Dr. J. A. Yajnik. | 30/- |
| 33. | Āc. Haribhadra's Nemināhacariu Pt. II : Editors Shri M. C. Modi and Dr. H. C. Bhayani. | 40/- |
| 34. | Up. Harṣavardhana's Adhyātmabindu : Editor Muni Shri Mitranandavijayaji and Dr. Nagin J. Shah. | 6/- |
| 35. | Cakradhara's Nyāyamañjarīgranthibhaṅga : Editor Dr. Nagin J. Shah. | 36/- |

36. Catalogue of Mss. Jesalmer collection : Compiler : Munirāja Shri Punyavijayaji. 0/4-
37. Prakrit Proper Names Pt. II. by Dr. M. L. Mehta and Dr. K. R. Chandra. 35/-
38. Karma and Rebirth by Dr. T. G. Kalghatagi. 6/-
39. Jinabhadrasūri's Madanarekhā Ākhyāyikā : Editor Pt. Bechardasj Doshi.
40. Prācına Gurjara Kāvya Sañcaya : Editor : Dr. H. C. Bhayani and Shri Agarchand Nahata.
41. Jaina Philosophical Tracts : Editor Dr. Nagin J. Shah. 16/-
42 Saṇatukumāracariya Editors Prof. H. C. Bhayani and Prof. Modi 8/-
43. The Jaina Concept of Omniscience by Dr. Ram Jee Singh 30/-
44. Pt. Sukhalalji's Commentary on the Tallvārthasutra Translated into English by Dr. K. K. Dixit. 30/-